# नाट्यसप्तकम्

## (संस्कृतध्वनिनाटकसंकलनम्)

प्रणेता

रमाकान्त शुक्लः

Rs. 100.00

१९९२




देववाणी-परिषद्, दिल्ली

…ाणी-विहारः, नयी दिल्ली—११००५९

ग्रन्थाङ्कः६६

# नाट्यसप्तकम्

## (संस्कृतध्वनिनाटकसंकलनम्)

प्रणेता :
डा० रमाकान्तशुक्लः

१९९२




प्रकाशिका
देववाणी-परिषद्, दिल्ली
वाणी-विहारः, नयी दिल्ली-११००५९
(भारतम्)

नाट्यसप्तकम्
(संस्कृतनाट्यसङ्कलनम्)

लेखकः : शुक्लः, डा० रमाकान्तः



प्रकाशिका : देववाणी-परिषद्, दिल्ली
६, वाणी-विहार, नई दिल्ली-११००५९

संस्करणम् : प्रथमम्, १९९२

मूल्यम् : शतं रूप्यकाणि रु० २००.००

मुद्रकः : देववाणी प्रिंटर्स
उत्तम नगर, नयी-दिल्ली-११००५९







NĀṬYASAPTAKAM
(A Collection of Sanskrit Radio Dramas)
Author : Shukla, Dr. Rama Kant



Publisher : Devavani Parishad, Delhi
6, Vani Vihar, New Delhi-110059

Printer : Dev Vani Printers
Uttam Nagar, New Delhi-110059

Edition : First, 1992

Price : Rs. Two hundred only Rs. 200.00

# समर्पणम्

'नाट्यसप्तक' मिदं गीर्वाणवाण्याः समर्थ-समुपासकेभ्यो गान्धिगौरव-लाल-बहादुरशास्त्रिचरित - बंगलादेश - भरतचरितामृत-गीतमहावीर-सुगमरामायण-श्रीकृष्णचरित-इन्दिरायशस्तिलक-चारुचरितचर्चा-अभिनवहनुमन्नाटक- भारत-स्वातन्त्र्यसंग्रामेतिहास-कृष्णात्परं किमपि तत्त्वमहं नजाने-संस्कृतवैभव-रसदर्शन-नवभारतपुराण-विभावन-नूतनसत्यनारायणकथा - श्रीनेहरूवृत्त-भूवैभव-सीताचरित्र-राधाचरित्र-प्रभृति ग्रन्थरचयितृभ्यो दैववाणी-परिषदः संस्थापकाध्यक्षेभ्यः ऐहिकजीवनस्य कष्टानि क्ष्वेडं शिव इव पीत्वाऽपि अविचलेभ्यः निरन्तरं सुरभारतीसपर्यापरेभ्यः, अर्धाङ्गिन्या श्रीमत्या रामकलीमहाभागया नित्यं समुपासितेभ्यः एम०ए०पीएच०डी०-साहित्याचार्य-सांख्ययोगाचार्य-शास्त्रचूडामणिभ्यः, कृशकायधृतप्रालेयाचसमुन्नतपाण्डित्येभ्यः तपःस्वाध्यायनिरतेभ्यो गुरुवर्य्येभ्यः **आचार्यडाक्टररमेशचन्द्रशुक्लमहाभागेभ्यः** सादरं समर्पयति ।

२१.८.१९९२ ई० — विनीत : रमाकान्त शुक्लः ।

# क्रमः

# प्राग्वाचिकम्

**'देववाणी-परिषद्, दिल्ली'** संस्थायाः सद्ग्रन्थप्रकाशनरूपमप्यन्यतममुद्देश्यमस्ति । तदनुसारं परिषदाद्यावधि नैके ग्रन्थाः प्रकाशिताः । इदानीञ्च परिषदः संस्थापकमहासचिवस्य किञ्च **'अर्वाचीनसंस्कृतम्'**इति नामधेयस्य त्रैमासिकपत्रस्य प्रधानसम्पादकस्य, २४-१२-१९४० ई. तारिकायाम् उत्तरप्रदेशान्तर्गतखुर्जानगरे पितुः श्रीमतो ब्रह्मानन्दशुक्लमहाभागात् जनन्यां श्रीमत्यां प्रियम्वदाशुक्लायां लब्धजनुषः 'भाति मे भारतम्' 'जय भारतभूमे' प्रभृतिकाव्यानां प्रणयनेन, कविगोष्ठीषु, अ० भा० संस्कृतसम्मेलनेषु सर्वभाषा-कविसम्मेलनेषु, आकाशवाण्यां दूरदर्शने च स्वरचनानां सरसगायनैर्वशीकृत-सहृदयवृन्दस्य, अद्यत्वे दिल्लीविश्वविद्यालयाङ्गभूतस्य राजधानीमहाविद्यालय-स्य हिन्दी-विभागे प्रवाचकपदमलंकुर्वाणस्य, पुण्यनगरस्थ-अखिलभारतीयप्राच्य-विद्यासम्मेलनस्य 'क्लासिकलसंस्कृत'-विभागस्य वर्तमानाध्यक्षस्य किञ्च सहृदयकविकान्तस्य श्रीरमाकान्तशुक्लमहाभागस्य 'नाट्यसप्तकम्' नाम ग्रन्थम् एकोनसप्ततिमग्रन्थरूपेण प्रकाशयन्ती देववाणी-परिषद् हर्षमनुभवति ।

लेखकेनैतेषु सप्तसु ध्वनिनाटकेषु यद्यपि पुरातनान्येवाख्यानानि गृहीतानि तथापि साम्प्रतिकयुगे सर्वाण्येव नाटकानि प्रासङ्गिकानि सन्ति । **'चक्रानुसरणं'** व्यतिरिच्यात्र सङ्कलितानां नाटकानां वर्तमानकालिकप्रासंगिकतामवलम्ब्य डा० श्यामविहारीलालशर्ममहाभागेनास्मत्सम्पादितस्य**'देववाणी-सुवास'** इत्याख्यस्य डा०रमाकान्तशुक्लाभिनन्दनग्रन्थस्य (ग्रन्थोऽयं डा० रमाकान्तशुक्लाभिनन्दन-समितिकृते देववाणीप्रकाशनेनाद्यत्वे मुद्राप्यते) एको लेखो पञ्चमखण्डे ५.०७३-५.०७९ पृष्ठेषु लिखितोऽस्ति । मन्ये आलोचकानां करकमलेष्वागतोऽसौ लेखस्तेषामुपकारी भवेत् ।

अद्य देववाणी-परिषदः सप्तदशः संकल्पना-दिवसः । २१-८-१९७६ तारिकायां परिषदः पञ्जीकरणार्थं नियमोपनियमाः समितिपञ्जीयककार्यालये प्रस्तुता आसन्। अत एवास्यां तारिकायां परिषदः 'सङ्कल्पना-दिवसः' सम्मान्यते। प्रायोऽस्मिन् दिवसे अन्यैरनुष्ठानैस्सह कस्यचिदग्रन्थस्य प्रकाशनमपि भवति । अद्य परिषदः संस्थापकस्य महासचिवस्य ध्वनिनाटकसङ्कलनम् **'नाट्यसप्तकम्'** प्रकाश्यते-इत्यर्थमहं परिषत्पक्षतः डा० रमाकान्तशुक्लमहाभागं वर्धापनैः सभाजयामि । श्रावण-चाक्षुष-ऋतुभूतं 'नाट्यसप्तकम्' सहृदयानां कृते सुफल-दायकं भूयादिति कामयते ।

देववाणी-परिषदः सप्तदशः संकल्पनादिवसः
२१-८-१९९२ ई.

विदुषामाश्रवः
'अभिराज'डा० राजेन्द्र मिश्रः
देववाणी-परिषदध्यक्षः

# प्रस्तावना

नाट्यसप्तके संकलितानि नाटकानि आकाशवाण्या दिल्ली केन्द्रात् १९६९-१९८९ ई. कालावधौ प्रसारितानि सन्ति । **पुरश्चरणकमलं** (हिन्दी-रूपान्तरणम्) १०-१०-१९८६ ई० तारिकायां, **पण्डितराजीयम्**-१२-१२-१९६९ ई० तारिकायां किञ्च ७-८-१९७० ई० तारिकायाम्, **'अभिशापम्'**२६-९-१९८० ई० तारिकायां,**'विक्रमोर्वशीयस्य ध्वनिनाट्य-रूपान्तरं'** १-३-१९८३ ई० तारिकायाम्, **'आलोकिनी'** २९-१०-१९८९ ई० तारिकायां **'दाराशिकोहीयम्'** २७-३-१९९७० ई० तारिकायां **'चक्रानुसरणं'** च १९-६-१९७० ई० तारिकायां प्रसारितान्यभूवन् । 'पण्डितराजीयाभि-शापदाराशिकोहीयचक्रानुसरणानां प्रस्तुतिः स्व० योगेश्वरकृष्णशास्त्रिणो निर्देशे किञ्च पुरश्चरणकमलविक्रमोर्वशीयालोकिनीनां प्रस्तुतिर्ममैव निर्देशे जाता । आकाशवाणीप्रस्तुतौ समयानुरोधात्क्वचित्कश्चित्संक्षेपोऽपि विहित आसीत् । सर्वाण्यपि नाटकानि ध्वनिनाटकानि कथयितुं शक्यन्ते ।

किञ्च ध्वनिनाटकानि सन्त्यपि सर्वाण्यपीमानि नाटकानि निर्देष्टुः कौशलात् मनाक् परिवर्तनेन मञ्चीयनाटकान्यपि भवितुं शक्नुवन्ति । **'पण्डितराजीयम्'** दिल्ल्याः 'श्रीराम सेण्टर' मञ्चे २५-१-१९८३ तारिकायां पुनश्च तत्रैव २९-१२-१९८३ तारिकायां किञ्च **'पुरश्चरणकमलम्'** तत्रैव ३०-१२-१९८३ ई० तारिकायां प्रयुक्ते सञ्जाते । एवमेवान्येषां ध्वनिनाटका-नामपि मञ्चप्रतुतिः शक्यैव ।

एतेषां समेषामपि नाटकानां प्रकाशनम् 'देववाणी-परिषद्, दिल्ली' संस्थायाः त्रैमासिकपत्रे **'अर्वाचीनसंस्कृते'** १९८४-१९९२ ई० वर्षान्तराले जातम् । तद्यथा **'पुरश्चरणकमलस्य पण्डितराजस्य** च षष्ठवर्षीये तृतीयेऽ-ङ्के,(जुलाई १९८४ई०)**अभिशापस्य** षष्ठवर्षीये चतुर्थेऽङ्के(अक्टूबर १९८४ई०) **'विक्रमोर्वशीयस्य आलोकिन्याश्च'** एकादशवर्षीये तृतीयेऽङ्के (जुलाई १९८९ ई०) **दाराशिकोहीयस्य** एकादशवर्षीये चतुर्थेऽङ्के (अक्टू.१९८९ई०) **चक्रानुसरणस्य** च चतुर्दशवर्षीये तृतीयेऽङ्के (१५ जुलाई १९९२ ई०) तारिकायां प्रकाशनं जातम् । अपरञ्च, पृथक्पुस्तकाकारेण **पुरश्चरणकमलम्** ३१-१२-१९८३ ई० तारिकायां, **पण्डितराजीयम्** २४-१२-१९८४ ई० तारिकायां, **अभिशापम्** २-१-१९८५ ई० तारिकायां 'देववाणी-परिषद्' दिल्ली'तः प्रकाशितानि बभूवुः । अस्माभिः **अर्वाचीनसंस्कृतस्यो**परिनिर्दिष्टा-ङ्कानां सम्पादकीयलेखेषु किञ्च पुस्तकानां प्रस्तावनासु एतेषां नाटकानां विषये किञ्चिन्निवेदितमस्ति अतस्तस्यात्र पुनरुक्तिर्नैव विधीयते । तज्जिज्ञासुभिरुपरि-

संकेतिता **अर्वाचीनसंस्कृताङ्क**: किञ्च ग्रन्था विलोकनीयाः। अत्रेदं सूचनीयं विद्यते यद् **आलोकिच्या**: आकाशवाण्या दिल्लीकेन्द्रात् २६.१०.१९८६ ई० तारिकायां दीपावल्यां रविवासरे जाते प्रसारणे प्रस्तुतिसाहाय्यं श्रीविमल कुमार छिब्बर-सन्ध्याभारद्वाजाभ्यां विहितम्। रामस्य भूमिका डा० सुरेश शास्त्रिणा, भरतस्य श्रीमधुरशास्त्रिणा, शत्रुघ्नस्य श्रीसुरेशपन्तेन, लक्ष्मणस्य श्रीशशिपालशर्मणा, सुग्रीव-भारद्वाजयोः, श्रीदिनेश्वरशास्त्रिणा (इदानीं दिवंगतेन), विभीषणस्य, श्री के.एन मध्वारायेन वसिष्ठस्यडा०रवीन्द्रनागरेण, उद्घोषकस्य श्रीरविशंकरदत्तेन, हनूमत्सुग्रीवयोश्च रमाकान्तशुक्लेन निर्व्यूढा। सीतायाः भूमिकां कु० शशिबालागुप्ता अलंकारिण्याः कु०अर्चनाशर्मा तारायाः कु० श्वेता सनाढ्या नान्दीपाठिकायाश्च डा० शुभ्राशर्मा निर्व्यूढवती।

'**नाट्यसप्तके**' सङ्कलितेभ्यो नाटकेभ्योऽतिरिक्तान्यपि ध्वनिनाटकानि मया रचितानि सन्ति। '**चक्रव्यूहभङ्गम्**' नाम ध्वनिनाटकं ११.१२.१९७०ई० तारिकायां आकाशवाण्या दिल्लीकेन्द्रात्प्रसारितं बभूव। अस्य नाटकस्य पाण्डुलिपिर्मम सकाशे नास्ति, केवलमाकाशवाणीनाटकविभाग-पाण्डुलिपिसंग्रह-ग्रन्थेषु सुरक्षितास्ति; तत्रैव स्थित्वा पाण्डुलिप्याः पुनर्लेखनाय च मया समयो न लभ्यते इति हेतोरिच्छतापि मया तत्समावेशोऽत्र कर्तुं नापार्यत। तत्स्थाने विक्रमोर्वशीयस्य ध्वनिनाट्यरूपान्तरणमत्र समावेशितम् यत्र नास्त्यस्माकं किमपि विशिष्टं कर्तृत्वं ध्वनिनाट्यरूपान्तरणकारित्वं विहाय। एवमेव '**गंगावतरणं**' नाम ध्वनिनाटकं २३-६-१९९२ई० तारिकायां पुनश्च २९-६-१९९२ ई० तारिकायाम् आकाशवाण्या दिल्लीकेन्द्रात् प्रसारितं जातम्। अस्याप्यत्र समावेशः कर्तुं नैव शक्यते यतो हि शीर्षकं 'नाट्यसप्तकं' गंगावतरणस्य विरचनात्पूर्वमेव ग्रन्थस्य पृष्ठेषु मुद्रितम् भवदासीत्।

एतेषु ध्वनिनाटकेषु मया विल्हण-पण्डितराजजगन्नाथादिपूर्वकवीनां पद्यानामप्युपयोगः क्वचित्कृतोऽस्ति। एतदर्थं तान् मनसि ध्यायं मया तेषामनुमतिर्गृहीतैवास्ति। अत्र मया पूर्वकवयः सादरं नूयन्ते। पुनश्च येषामाशीर्वचोभिरनेन जनेन खुर्जास्थे श्रीराधाकृष्णसंस्कृतमहाविद्यालये १९५१-१९६२ई० वर्षेषु देववाण्या अक्षरद्वयमधिगतं ते सर्वेऽपि दिवंगता गुरुवो विद्यावाचस्पति पं० परमानन्दशास्त्रि-पितृचरणश्रीब्रह्मानन्दशुक्ल-पं० कुबेरदत्त शास्त्रि-पादाः सश्रद्धं स्मर्यन्ते। पुनश्च नाट्यसप्तकस्य प्रकाशनवेलायां साम्प्रतिक-संस्कृतनाटकरचयितारो नाट्यप्रयोक्तारो नाट्यचिन्तकाश्च श्री.भि.वेलणकर-पं. आगेटिपरीक्षितशर्म-वी. आर. शास्त्रि-अभिराज डा०राजेन्द्र मिश्र-डा० राधावल्लभत्रिपाठि-आचार्यश्रीनिवासरथ-डा० कमलेशदत्तत्रिपाठि - प्रभृतयः सादर नमस्यन्ते येषां प्रयासैर्देववाण्याः सुधासन्देशाः बहुभिर्जनैर्लभ्यन्ते।

एतेषां नाटकानां प्रस्तुतौ यैरनुकार्याणां भूमिका निर्व्यूढास्तेषु कलाकारेषु दिवंगता: श्री योगेश्वरकृष्ण शास्त्रि-श्री धरणीकान्त झा-श्रीदिनेश्वर शास्त्रिणो ऽद्यास्माकं मध्ये यश:शरीरेणैव तिष्ठन्ति । तेषां पुण्यस्मरणं करोमि । उक्त-नाटकप्रस्तुतिषु विविधभूमिकानुष्ठातार:-श्री सुरेश्वरशास्त्री, श्रीमधुरशास्त्री, श्री उग्रसेन शास्त्री, कु० शशिबाला गुप्ता, सुश्री विजयलक्ष्मी, राजलक्ष्मी अनुराधा, सरोजिनी प्रीतम, श्री सुरेशपन्त:, श्री राजीव राजगुप्त:, श्री रमण कुमार शर्मा, श्री रविशंकरदत्त:, श्री विश्वनाथ शर्मा, श्री शशिपाल शर्मा, के.एन. मध्वाराय, डा० रवीन्द्रनागर:, डा० शुभ्रा शर्मा, कु० श्वेता सनाढ्य, श्रीबलदेवानन्द सागर:, श्रीसुरेन्द्र शर्मा, श्रीराधेश्याम शर्मा, श्रीशंकरलाल: कु०नीरजा भनोट, कु०प्रतिमा तुरखिया, कु०रेखा कटारिया, कु०अर्चना शर्मा, कु०अनुपमा सेठ, कु०हेमलता, कु०भवानी अय्यर, कु०भारती भाटिया, कु०तनूजा, कु०अनुक सक्सेना, कु०श्वेता (यास्वधिकांशा: श्रीमत्य: सत्य: गृहलक्ष्मीभूमिकां निर्वहन्तीति मन्ये), श्रीमती मालती, श्री जयशंकर: भूषण-भगिन्यौ, डा० कृष्णचन्द्र त्रिपाठी, श्री चन्द्रमौलिशुक्ल:, श्री प्रमोद दुआ, श्री गणेश प्रसाद:, श्री केदारदत्त शास्त्री, श्री अनिल कोचर:, गोवर्धन सेमवाल:, श्री रतनकुमार, श्री संजयकुमार:, श्री भूपेन्द्रपुरोहित:, कु०कमलेश, सपरिकर: संगीतकार: श्री छोटेलाल:, मञ्चप्रस्तुतिनिर्देष्ट्री श्रीमती कमलिनी दत्तमहाभागा अन्ये च ते सर्वेऽपि कुशीलवा: संगीतकारा: ध्वनिप्रकाशरूपसज्जा-काराश्च ये संस्कृतनाटकप्रस्तुतौ विविधकार्यव्यापृता अपि सन्तोऽस्मभ्यं सहर्षं सुलभीभवन्ति मया-ग्रन्थप्रकाशनकाले यथायोग्य सादरं सस्नेहं च नमस्क्रियन्ते साधुवादै: शुभाशीर्भिश्च सभाज्यन्ते । श्रीगोपाल सक्सेना-श्री सुशीलबैनर्जी-श्रीकमलदत्त-श्रीविमल कुमार छिब्बरमहाभागैर्ध्वनिनाट्यप्रस्तुतौ समनोयोगं योगदानं कृतमिति ते सर्वेऽपि साधुवादार्हा: ।

**नाट्यसप्तकस्य** प्रकाशनमधिकृत्यापि किञ्चिन्निवेदनीयं विद्यते । १९८० तमेशवीयेऽब्दे मया भारतसर्वकारस्य शिक्षासंस्कृतिमन्त्रालयस्य शिक्षाविभागो **'ध्वनिपञ्चकम्'** इत्येतच्छीर्षकेण पञ्चध्वनिनाटकानां प्रकाश-नार्थमनुदानं दातुं प्रार्थितोऽभूत् । तेन च १-५५/८०संस्कृत II संख्याक २५-८-८१ दिनांकितपत्रमाध्यमेनानुदानं स्वीकृतमपि । किन्तु १९८४ ई० यावद् ध्वनि-पञ्चकस्य प्रकाशनं न शक्यमभूद् यतो हि अनुदानं लब्धुं प्रथमं लेखकेन प्रकाशकेन वा स्वप्रयासैरेव ग्रन्थ: पूर्णतया प्रकाशनीयो भवति । मन्त्रालयाद्ग्रन्थ-प्रकाशनपुरस्समनुदानोपयोगार्थं स्मारकपत्रमपि लब्धम् किन्तु **'ध्वनिपञ्चकस्य'**

मुद्रणं नैव जातम् । अस्मिन्नन्तराले मया संकलने सप्तनाटकानां समावेशमभिलषता, अस्य ग्रन्थस्य '**नाट्यसप्तकम्**' इति शीर्षकान्तर्गतं प्रकाशनं संकल्पितम्। तदनुसारं च २२-१२-१९८६ ई० तारिकायां भारतसर्वकारस्य मानवसंसाधनविकासमन्त्रालस्य शिक्षाविभागः सूचितः । तदा १९८७ तमेशवीयाब्दस्य मार्चमासं यावदस्य प्रकाशनं लक्ष्यत्वेन निर्धारितमासीत् ।

मन्त्रालयेनएफ०सं० १-५५/८० संस्कृत II संख्यांक २८-१-१९८७ दिनांकितपत्रानुसारं ३१-३-१९८७ यावद् '**नाट्यसप्तकस्य**' प्रकाशने अनुदानं स्वीकृतम्। किन्तु तस्याप्युपयोगः कर्तुं मया नापार्यत । कारणं तत्र, विश्वविद्यालये, कालेजे चाध्यापनम्, देशस्य तेषु तेषु भागेषु गोष्ठीषु सारस्वतोत्सवेषु च सहभागित्वम्, अर्वाचीनसंस्कृतस्य सम्पादनम्, देववाणी-परिषत्कार्यकलापानां सञ्चालनम्, पुनश्च गृहकार्याणामपि यथाशक्यमनुष्ठानम् (यद्यप्यत्र मम धर्मपत्न्या श्रीमत्या रमाशुक्लया आत्मजैश्च चि० डा०चन्द्रमौलिशुक्ल-आनन्दवर्धनशुक्ल-अभिनवशुक्लैरेव प्राधान्येन व्यापृयते)-एवमादि । अस्तु इदानीं '**नाट्यसप्तकम्**' देववाणी-परिषदः सप्तदश-सङ्कल्पनादिवसे प्रकाश्यते ।

मुद्रणगताशुद्धीनां कृते नतनिटिलोऽहं पाठकान् सविनयं क्षमां याचे । कृतेऽपि प्रयत्ने कदाचित्प्रूफपाठकस्यानवधानात् कदाचित्संशोधनकर्तुरक्षरयोजकस्य कल्पनातिरेकात्, कदाचिन्मुद्रणयन्त्रचालकपुरुषकारुण्यात् कदाचिच्च अन्यस्यापि कस्यचित्प्रमादादशुद्धिः संजायत एव । वयमपि क्षुब्धा भवाम एव । कदाचिल्लेखकस्यैव प्रमादाद्भाषागताशुद्धयः सञ्जायन्ते । किन्तु विद्वांस उपस्थितस्य गतिं चिन्तयन्तस्त्रुटीनां परिमार्जनं कुर्वन्त्येव । अत्रापि कृपालुविद्वद्भिस्त्रुटिपरिमार्जनेन वयमवश्यं कृतार्थनीयाः ।

अन्ते चाहं देववाणी-परिषदो वर्तमानाध्यक्षान् हिमाचलप्रदेशविश्वविद्यालयसंस्कृतविभागाचार्याध्यक्षान् 'अभिराज' डा० राजेन्द्रमिश्रमहाभागान् प्रति सादर कृतज्ञमावहामि ये प्रास्ताविकलेखनेन 'नाट्यसप्तकं' मां च कृतार्थयन्ति ।

देववाणी-परिषदः सप्तदशः संकल्पनादिवसः
श्रीकृष्णजन्माष्टमी च
२१.८.१९९२ ई०

विदुषां वशंवदः

(रमाकान्त शुक्ल)

## पात्राणि

१. रामः

२. लक्ष्मणः

३. हनूमान्

४. जाम्बवान्

५. विभीषणः

६. अञ्जना

७. देवी महाशक्तिः

६. नल-नील-गवाक्षाङ्गद-सुग्रीव-
वानरवीराः

रमाकान्तशुक्लप्रणीतं नाटकम्

# पुरश्चरणकमलम्

"निराला"कृत-"राम की शक्तिपूजायाः" संस्कृतनाट्यरूपान्तरम्

(पूर्वरङ्ग-नान्द्यन्ते नेपथ्यतो वाचकध्वनिः श्रूयते)

वाचकः : रविरस्तमगात्, ज्योतिष्पटले लिखितं ह्यमरम्,
अद्यतनं स्थगितं श्रीराघवरावणसमरम्,
अत्यन्ततीक्ष्णशरपातयुतं वगप्रखरं,
शतशैलसंवरणशीलं पूरितनभस्स्वरं,
प्रतिपलव्यूहपरिवृत्तियुतं कौशलभरितम्,
राक्षसविरुद्धप्रत्यूहकुपितकपिहूह - कृतम्,
राघवलाघव - रावणवारण - गतद्विप्रहरं,
उद्धतलङ्कापतिमर्दितकपिदलबलप्रसरं,
अनिमेषरामविश्वजिद्दिव्यशरभङ्गकरं
खररुधिरस्रावं, विद्धयोद्धृनिर्भयनिकरं,
रावणप्रहारदुर्वारविकलवानर - दल - बल-
मूर्च्छितसुग्रीवाङ्गदभीषण-गवाक्ष - गय - नल-
सौमित्रभल्लपति - वारितागणितमल्लरोध-
गर्ज्जत्प्रलयाब्धिक्षुब्धहनूमन्मात्रबोध-
मुद्गोरितवह्निभीमपर्वतकपियत्नकरं,
जानकीभीरुहृदयाशादं विकटं समरम् ।
युगदलौ निवृत्तौ; राक्षसपादैश्चलिता भूः,
उल्लासविद्ध आकाशो नितरां विकलोऽभूत् ।
रघुपतिपदचिह्नविलोकनखिन्ना कपिसेना
शिविरं प्रति चलिता स्थविरावली यथा भिन्ना !

रघुपतिमनुयाति लक्ष्मणस्तं वानरवीराः ।
चिन्ताचुम्बितचिताः सर्वे यद्यपि धीराः ॥
सम्प्राप्ताः पर्वतशिखरे सर्वे विश्रान्ताः ।
सुग्रीवविभीषणजाम्बवदादिकविक्रान्ताः ॥
नलनीलगवाक्षांगदमारुतिप्रमुखाः वीराः
रामं परितस्तिष्ठन्ति मनस्युत्का धीराः ।

(वाचकध्वनिमनुरुद्ध्य युद्धस्थलानिवर्तमानं खिन्नं रामदलम् । रामदलवीराः पर्वतशिखरे मन्थरगत्या आयान्ति । तिष्ठन्ति । परामर्शं कर्तुं प्रारभन्ते । हनूमान् पादप्रक्षालनार्थं जलमानयति ।

**श्रीरामः :** (सुग्रीव - विभीषण - जाम्बवदंगद - नल - नील-गवाक्षान् प्रति) वीराः, ननु गच्छन्तु सन्ध्योपासनांमनुष्ठातुम् । प्रतिनिवर्तने भवतां, भाविनो रणस्य विषये परामर्शं करिष्यामः ।

(सर्वे गच्छन्ति । हनूमान् तिष्ठति)

**लक्ष्मणः :** आर्य ! किं चिन्त्यते ?

**श्रीरामः :** वत्स लक्ष्मण ! अद्यतनं युद्धमेव विचिन्तयामि ! मया किं किं शरसन्धानकौशलमद्य न प्रदर्शितम्, किन्तु सकलमपि निष्फलमेव संजातम् ! रावणस्य दुर्वार-प्रहारैर्वानरा विकला अजायन्त । केवलं हनूमानेव युद्धे प्रबोधं भजते स्म, अन्ये तु आस्माकीना वानरवीरा मूर्च्छिता एवाभवन् । रणस्थलात् प्रत्यावर्तनवेलाया-महमिव तेऽपि खिन्नतां श्रान्तिं चानुभवन्त आसन् । श्वः किं भविष्यति ? —इत्येव चिन्ता मां दुनोति ।

**लक्ष्मणः :** आर्य ! अलं चिन्तया ! संकटकाले धैर्यं न त्याज्यम् । दृढनिश्चयेन, अध्यवसायेन श्रमेण च नूनं वयमन्यायपरं

रावणं जेष्यामः, आर्यां जानकीं च तस्मान्नीचापसदा-न्मोचयिष्यामः। जय-पराजयौ तु रणस्थले भवत एव। अद्य यदि रावणो विजयी इव दृश्यते तर्हि श्वः स पराजितोऽपि भवितुं शक्नोति। आर्येणैवं दैन्ये समा-लम्बिते सति अन्येषां वीराणां का दशा भवेदित्यार्येण विचारणीयम्। ननु सेनापतेरेव मनोवलेन सैनिकानां मनोवलं वर्धते।

**श्रीरामः** लक्ष्मण ! दैन्यं नावलम्बे, नापि धैर्यं त्यजामि, अपि तु यथार्थं परिशीलयामि। अद्य युद्धे उद्धतलङ्कापतिना यथा कपिदलवलं मर्दितं तत्स्मारं स्मारं तु इदमेव प्रतीयते यद्रावणोऽजेयः संवृत्तः। कथमधुना जानकीं विमोचयि-ष्यामि कथं च अयोध्यावासिनः स्वमुखं दर्शयिष्यामि-इति चिन्ता दुनोति मे मानसम् !

(कृतसन्ध्योपासनानां वानरवीराणामागमनम्)

आगच्छतन्तु वीराः। तिष्ठन्तु।

(वीरास्तिष्ठन्ति। जाम्बवान्, विभीषणः सुग्रीवः सम्मुखं तिष्ठन्ति। पद-प्रान्ते हनूमान् प्रथमत एव तिष्ठति) सर्वे श्रान्तिं रूपयन्ति)

कथमनुभूतमद्यतनं युद्धम् ! श्वो युद्धे गन्तुमुत्सहन्ते अत्रभवन्तः ?

**सर्वे :** अवश्यम् !

**वीरः (१) :** रणात्पलायनं तु कादराणां स्वभावः,न तु वीराणाम्।

**वीरः (२) :** ताटका - सुबाहु - विराध-- त्रिशिरा - खरदूषणान्तकस्य श्रीरघुवीरस्य सहायका वीराः सन्ति न तु कादराः।

**जाम्बवान् :** भगवती जानकी प्रतीक्षते भवद्दर्शनम् औत्सुक्येन !

**श्रीरामः** : जानकि !

('फ्लैशबैक' - पद्धत्या पुष्पवाटिका-जयमाला-वनगमन-दृश्यानां प्रत्यायनम् । अशोकवाटिकायां स्थिताया दीनाया जानक्या रामं प्रत्यवलोकनम् ।[1] रावणस्याऽट्टहासः । रामो व्याकुलतां नाटयति । अश्रुमोचनं करोति)

**हनूमान्** : प्रभोर्नयनाभ्यामश्रुपातः ! धिङ् माम् ! मयि जीवति प्रभोश्चेतसि पीडा ! अयमहं समस्तं व्योम एव ग्रसिष्यामि ! पश्यामि च, कथं नाम श्रीरामस्य किमपि व्यथाकारणं कुत्राप्यवशिष्यते ?

(इति सक्रोधमाकाशोत्पतनं सूचयति)

(नेपथ्ये **शंकरध्वनिः** देवि ! महानाशो भावी । स्वतेजः संवृणु । नायं हनूमान् साधारणः कपिरपितु चिरब्रह्मचारी, मर्यादापुरुषोत्तमरामस्यार्चनायाः साक्षाद्विग्रहः । अमुं तेजसा प्रहरन्ती त्वं पराजयं लप्स्यसे ! विद्यामाश्रित्यैनं प्रबोधय । अयं नम्रतामङ्गीकरिष्यति । संकटं दूरीभविष्यति । त्वरस्व देवि ! त्वरस्व ।

(गर्जनादिध्वनिः)

**देवीध्वनिः** : युक्तं भणसि महादेव ! अहमञ्जनारूपं धृत्वा प्रबोधयामि हनूमन्तम् ।)

(अञ्जना प्रकटीभवति)

**अंजना** : वत्स हनूमन् ! हनूमन् ! किमिदं व्यवस्यते त्वया ?

**हनूमान्** : अये ! ममाम्बा ! प्रणमामि मातः !

**अंजना** : वत्स ! चिरञ्जीव ! किमिदमकार्यमनुष्ठीयते त्वया ? ननु आकाशं ग्रसितुं तत्परोऽसि ?

---

१. अत्र यथासौविध्यं निर्देशकेन योजना कार्या ।

**हनूमान् :** सम्यग् लक्षितमम्बया ! अद्य मया भगवतो रामस्य नेत्रयोः अश्रुकणाः वीक्षिताः। मयि जीवति स्वामी यदि पीडया साश्रुनयनो भवति तदा धिङ्माम् ! अहं निखिलमपि विश्वं ग्रसिष्यामि ! रामाय कष्टदाता न कोऽपि कुत्राप्यवशिष्येत !

**अंजना :** पुत्र ! नेदमकार्यं कर्तुमर्हसि।

**हनूमान् :** कथमकार्यम् ? किमत्र अकार्यत्वम् ? ननु पश्यत्वत्रभवती कथं सुकरतया ग्रस्यते मयाकाशः।

**अंजना :** अलमलमनेन शौर्यप्रदर्शनेन ! शैशवे रविं ग्रसित्वा त्वया जगत् अन्धकारे निमज्जितम्। अधुना यौवने च आकाशमेव ग्रसितुमनाः सन् श्रीरामस्य अहित-माचरसि !

**हनूमान् :** श्रीरामस्य अहितम् ? कथमेतत् ? तत्प्रीतय एव तु अह-माकाशं कवलीकर्तुमिच्छामि ! समस्तेऽपि ब्रह्माण्डे श्रीरामस्य शोककारणमहं स्थातुं नानुमंस्ये।

**अंजना :** बलनिधानमसि इत्यहं जाने ! इत्यपि जानामि यत्सर्व-मपि चिकीर्षितमनुष्ठातुं समर्थोऽसि ! किन्तु मूढ ! किं त्वं जानासि यन्महाकाशे भगवतः श्रीरामस्य आराध्य-देवो देवाधिदेवो भगवान् शङ्करो निवसति। भगवान् श्रीरामस्तु शंकरं पूजयति, त्वं च स्वस्वामिनस्तम् इष्टदेवमेव ग्रसितुमुपक्रमसे। धन्योऽसि पुत्र ! किं रघुनन्दनेन एवं कर्तुमाज्ञप्तोऽसि ? किं श्रीरामोऽस्मिन् कर्मणि असमर्थ आसीत् यत्त्वामत्र स न्ययूयुजत् ? तव एतादृशैः कृत्यैरहं नताननना भवामि ! एतस्माद् असतो मनोरथात् स्वमनो निवर्तय ! बलनिधान ! बुद्धिनिधान-मपि भव ! स्वस्वामिनोऽभिप्रायमज्ञात्वैव अत्युत्साह-

कृतानि अकार्याणि कुर्वाणाः सेवकास्तस्य यशो दूषयन्ति। न च त्वं तथा भूयाः। गच्छ श्रीरामस्य अन्यैः कृत्यैः सेवामाचर।

**हनूमान् :** मातः। सम्यगवबोधितोऽस्मि! मया तु विस्मृतमेवासीत् यन्ममेष्टदेवस्यापीष्टदेवस्य भगवतः शंकरस्यावासभूतो महाकाशः। तत्प्रतिनिवर्ते! अम्ब! अनुजानीहि प्रतिनिर्वर्तितुम्।

**अंजना :** वत्स! शुभं ते भूयात्।
(अंजना निलीयते। शान्तो हनूमान् अवतारं सूचयति)
(स्थानम्: पूर्वोक्तम्। हनूमानागत्य श्रीरामचरणयोर्निकटे उपवशति। श्रीरामः शान्तश्चिन्तितो विषण्णश्चास्ति।)

**विभीषणः :** रघुवीर! अद्य निसर्गप्रसन्नं भवद्वदनकमलं सविशेषं चिन्ताम्लानमिव कथं वीक्ष्यते?

**हनूमान् :** सत्यमाह विभीषणः। किञ्चित्कालपूर्वमत्रभवतो नेत्राभ्यामश्रूण्यपि पतन्ति स्म।

**रामः :** सखे विभीषण! मन्दभाग्योऽस्मि! रणे विजयं लब्धुमनीशोऽस्मि! इयमेव चिन्ता आकुलीकरोति माम्!

**विभीषणः :** रघुवीर! किमिदमसामयिकमुदीर्यते? ननु त एव अमोघप्रतापाः भवतः शराः तूणीरमध्यासते, तदेव संकटसहनक्षमं वक्षः, तावेव रणकुशलौ हस्तौ, तदेवामितं बलम्, स एव समरे मेघनादजयी सुमित्रानन्दनः, स एव ऋक्षराजः, स एव प्रमना सुग्रीवः, स एव महाबलोऽङ्गदः, स एव अबुदसम एको वीरो महावीरो हनूमान्, ते एव दक्षा सेनानायकाः, तदेव समरम्! सत्स्वपि एतेषु विजयसम्भारेषु कथं सन्दिहानो लक्ष्यते भवान् विजयविषये?

**रामः :** विभीषण ! न भवता ज्ञातुं शक्यते । सत्स्वपि विजय-सम्भारेषु विजयो दुर्लभः । भग्नोत्साहोऽस्मि ! क्षीणाशोऽस्मि !

**विभीषणः :** रघुकुलगौरव ! कथं लाघवमापन्नोऽसि ? न युज्यते इयं दीनता तस्मिन् क्षणे यदा विजयश्रीः भवतः स्वागतं कर्तुं सन्नद्धा तिष्ठति ! अस्मिन् काले औदासीन्यं नावलम्बनीयम् । मन्दोत्साहता नाङ्गी-करणीया । ननु स्मरति भवान् भवता भवदनु-सर्तृभिश्च कियान् श्रमो विहितो लङ्कां जेतुम् । जानक्या समाचारमानेतुं हनुमता कियत् साहसं कृतम् ! भवता च जानकीं रावणपाशात् विमोचयितुं किं किं न सोढम् ! अल्पीयसैव कालेन भवान् जानकीं प्राप्स्यति ! सा भवद्दर्शनं प्रतीक्षते । भवां-श्चावसादमङ्गीकृत्य तस्या दूरं पलायितुमीहते !

**रामः :** विभीषण !

**विभीषणः :** रघुवीर ! सत्यमहं भणामि । यदि भवानस्मिन् क्षणे मन्दोत्साहतां भजते तर्हि जानकी अत्यन्तं विपद्ग्रस्ता भविष्यति । कल्मषो रावणः, खलो रावणः, गता-चारो रावणः, हितोपदेशं कुर्वति मयि पादप्रहारी रावणः अशोकवाटिकायां सीतां पुनरपि क्लेशयि-ष्यति; पारिषद्यैः परिवृतः स्वजयकथां कथयिष्यति, वसन्तर्तौ उपवने विस्रब्धं पिकानां कलकूजनं समा-कर्णयिष्यति···यद्येवं भवान् मन्दोत्साहो भवति! ननु स्मर्यताम्- भवताहं 'लङ्केश' पदेन सम्बोधितः । अपि नामाहं लंकेशः संवृत्तः ?

(सभा निस्तब्धतां नाटयति ।)

**रामः** : (दीर्घं निःश्वस्य) सखे विभीषण ! समरे जयोऽस्माभिर्न लप्स्यते ? नेदमधुना नरवानराणां राक्षसेन सह युद्धमवसितम्। रावणेनामन्त्रिता महाशक्तिरधुना रावणपक्षे सम्मिलिता। महाशक्त्या सह नरवानराणां युद्धं कथं सम्भाव्यते ? हन्त ! यत्रैवान्यायस्तत्रैव महाशक्तिरपि संयुक्ता ! महाशक्ते ! किमिदमनुष्ठीयते भवत्या ?

(इत्यश्रूणि मुञ्चति। कण्ठावरोधं नाटयति। लक्ष्मणस्तेजश्चमत्कृतिं नाटयति। हनूमान् विवशतां, जाम्ववान् गम्भीरतां स्थितिज्ञतां च, सुग्रीवो व्याकुलतां, विभीषणश्च कार्यक्रमनिश्चयं नाटयति)

**रामः** : (संयतः सन्) न ज्ञातुं पारये दैवीविधानपरम्पराम् ! देव्या महाशक्त्याः कृते अधर्मरतोऽपि रावणः स्वकीयः संवृत्तः, अहं चापरः सञ्जातः ! शिव शिव ! अयं क्रीडाविलासः शक्तिदेव्याः !

**सर्वे** : (औत्सुक्यं गंभीरतां च नाटयन्ति)

**रामः** : अद्य रणे मया मुहुर्मुहुर्योजिताः निशिताः शराः खण्डिताः संवृत्ताः, श्रीहताः सञ्जाताः। त एव शराः प्रभावहीना अजायन्त यैरियं सम्पूर्णापि संसृतिर्जेतुमशक्यत, यैश्च समस्तापि सृष्टिः विपद्भ्यस्त्रातुमशक्यत; ये च घातकपतनसंस्कारयुता आसन्; येषु च क्षात्रधर्मस्य पूर्णाभिषेकोऽस्ति। ये च प्रजापतीनां संयमैः अरक्ष्यन्त !

**सर्वे** : (गंभीरतामौत्सुक्यं च नाटयन्ति)

**रामः** : मयाद्य रणे दृष्टं यन्महाशक्तिः रावणं स्वांके दधानास्ति तथैव, यथा शशी कलङ्कं धारयति। सा मया क्षिप्तान् मन्त्रपूतान् शरान् हेलयैव संवृणोति ! सर्वेऽपि मामकीना अमोघा बाणाः लक्ष्ये मोघा अजायन्त ! यथा यथाऽहं

कपिदलं व्याकुलं वीक्ष्य युद्धाय क्रुद्धोऽभूवम् तथा तथा देव्याः दृग्भ्यो ज्वलद्वह्निज्वालेवादृश्यत ! अथ सा मामीक्षितुमारभत ! तस्या अवलोकनेनाहं स्तब्ध इवाभवम् ! धनुराकर्षणस्यं मम शक्तिः क्वचिद्विलुप्ता ! बद्ध इवाहं संवृत्तः । त्रस्त इवाहं सञ्जातः । महाशक्ते ! किमिदं भवत्या आरचितमद्य ! किमिदं व्यवसितं भवत्या ! यदा भवती एव अन्यायपक्षपातिनी संवृत्ता तदा असहायोऽहं किं करोमि ? (निःश्वासं मुञ्चति)

**जाम्ब०** : रघुवर ! अलं चिन्तया ! नैवं विचलितो भवितुमर्हति । भवतापीयं शक्तिः धार्यताम् । आराधनस्य दृढतराराधनेनोत्तरं दीयताम् । संयतप्राणैः प्राणेषु विजयो व्रियताम् । यदि नाम रावणः अशुद्धः सन्नपि शक्तिबलेन भवन्तं त्रस्तमकरोत्तर्हि शुद्धस्तु भवान् सिद्धो भूत्वा तमवश्यमेव ध्वंसयिष्यति !

(रामः कञ्चिदुत्साहं रूपयति)

राघवेन्द्र ! भवतापि शक्तेः पूजा कल्प्यताम् । यावत्सिद्धिर्नैव लभ्येत, तावद् युद्धं त्यज्यताम् ! भवत्साधनाकाले लक्ष्मणोऽस्माकं महावाहिन्या नायकत्वेन स्थास्यति । अङ्गदः, अहं हनूमांश्च तस्य प्रधानसहायकत्वेन स्थास्यामः । नल-नीलौ, सुग्रीवो विभीषणः, अन्ये च यूथपतयस्तदादेशानुसारं यथावसरं स्वनियोगमशून्यं विधास्यन्ति ।

**सर्वे** : (उत्साहं प्रसन्नतां च रूपयन्ति)

**रामः** : ऋक्षपते ! एष भवतः शुभः कल्पः ! अवश्यं मया महाशक्तिराराधनीया !

(रामो ध्यानं निरूपयति। पुनश्च आवेगरहितस्वरेण देवीं मनसि कृत्य ब्रवीति) मातर्दशभुजे ! विश्वज्योतिः। तव शरणागतोऽस्मि !

(फ्लेशबैकपद्धत्या देव्याः महिषासुरमर्दि रूपं प्रदर्शयितुं शक्यते)

तव शक्त्या विद्धः सन् खलो महिषासुरः मर्दितोऽभूत्। धन्योऽसौ तव चरणतलगतो गर्जन् सिंहः। मातः ! गृह्णामीङ्गितम्। नूनमयं सिंहो मम प्रतीकभूतः। अहं अयमिव निर्भीकः सन् त्वां वोढा।

(रामो ध्यानं निरूपयति। देवीच्छविलीनतां रूपयति। यद्यस्मिन्नवसरे देव्या रूपं प्रदर्शयितुं शक्यते तर्हि शोभनं भवेत्। सर्वे वीराः रामस्य भावस्मितमाननं पश्यन्ति।)

**रामः :** (धीर-गंभीरस्वरेण) बन्धुवराः। ननु पश्यत। पुरतो योऽयं शतहरितगुल्म-तृणैः श्यामलः सुन्दरो भूधरः शोभते स एव पार्वती-रूपेण प्रतिभाति। चरणप्रान्ते गर्ज्जन्नयं सिन्धुर्नास्ति अपि त्वयं देव्याः सिंहोऽस्ति। दश दिशोऽस्या हस्ताः सन्ति। मनागूर्ध्वं पश्यत। अम्बरे दिगम्बरः शशिशेखर अर्चित इव दृश्यते ! इदं महाभावमङ्गलं वीक्ष्य मानवमनसि वसानस्य असुरभावस्य गर्वः खर्वतां याति ! जय जय हे महिषासुरमर्दिनि। जय जय शैलसुते ;

(यथासैविध्यमत्र कस्यचित् देवीस्तोत्रस्य पाठः कारयितुं शक्यते अथवा 'पूर्वध्वन्यंकितं' (Pre-recorded) स्तोत्रं नेपथ्येन प्रस्तोतुं शक्यते। पात्राणि तदनुरूपम् ओष्ठसञ्चालनं भावाभिनयं वा कर्तुं शक्नुवन्ति)

(मधुरदृष्ट्या हनूमन्तमाकर्षन्निव, प्रियतरस्वरेण हनूमन्तं

प्रति) कपिवर ! अस्मभ्यमष्टोत्तरशतमिन्दीवराण्यपेक्ष्यन्ते। यद्यधिकानि लभामहे तर्हि अधिकस्याधिकं फलम् ! प्रियवर ! उषःकाले एव सत्वरं देवीदहं गत्वा इन्दीवराण्यवचित्यानय। तदनन्तरं रणे गत्वा स्वपराक्रमं प्रदर्शय ! देवीदहस्य मार्गं, दूरतां स्थितिं च ते जाम्ववान् कथयिष्यति। कथं मन्यते ऋक्षपतिः ?

**जाम्ब०ः** युक्तमाह राघवेन्द्रः। (हनूमन्तं प्रति) हनूमन् ! अहं देवीदहस्य विषये यथाभिलषितां सूचनां तुभ्यं दास्यामि !

**हनूमान्ः** अनुगृहीतोऽस्मि यत्प्रभुणास्मिन् पुण्यकर्मणि नियुक्तोऽस्मि। (श्रीरामस्य चरणौ स्पृशति। पदरजः शिरसि धारयति। जाम्बवान् तस्मै देवीदहमार्गनिर्देशं नाटयति। हनूमान् प्रतिष्ठते)

**रामः :** बान्धवाः ! अतिकालः सञ्जातः। गच्छत, यूयमपि विश्रामं कर्तुमर्हथ।

**सर्वे :** विजयताम् श्रीराघवेन्द्रः ! (इति निष्क्रान्ताः)



(सूर्योदयपूर्ववेलायामरुणिमा। शनैः शनैः सूर्योदयः। रामः पूजासनमध्यास्ते। हस्ते धनुर्बाणौ न स्तः। जटाः बद्धा न सन्ति। हनूमान् आगच्छति)

**हनूमान्ः** भगवन् ! इमानि अष्टोत्तरशतमिन्दीवराणि देवीदहतः समानीतानि।

**रामः :** साधु कपिवर ! साधु !

**हनूमान्ः** इदानीं को नियोगोऽनुष्ठीयताम् ?

**रामः :** वत्स गच्छ ! त्वमपि रणे सैन्यसाहाय्यं कुरु। अहमपि एकान्तमिच्छामि। आराधनां प्रारभे।

(नेपथ्ये रणकोलाहलः श्रूयते किन्तु रामः शान्तभावेन पूजायां रतोऽस्ति। पूजोपरान्तं दशभुजाया दुर्गाया नामानि जपति। मनसि देव्या नाम्नां गुणग्रामाणां मननं करोति। नाट्यनिर्देशककौशलेन देव्याश्छवयोऽपि 'स्लाइड-प्रयोगेण' 'जालप्रतिसीरा'-प्रयोगेण वा प्रदर्शयितुं शक्यन्ते रामः करमालया (अथवा रुद्राक्षमालया) एकजपस्य क्रमं पूरयित्वा एकैकं कमलमिष्टदेव्यै समर्पयति।)

**वाचकः :** एवं श्रीरामो देव्याः समाराधने तत्परोऽस्ति। गहनाद् गहनतरं समाराधनमनेन सम्पाद्यते। पञ्चदिवसाः अनेन क्रमेण व्यतीताः।

मूलाधारतः ऊर्ध्वतरं स्थितेषु चक्रेषु अस्य मनः सञ्चरते। जपानन्तरमेकमिन्दीवरमिष्टदेवतायै समर्पयति। एवं हि निजपुरश्चरणं पूरयितुमयं साधनायामग्रे सरति।

षष्ठे दिवसेऽस्य मनः आज्ञाचक्रे समाहितम्। प्रतिजपं महदाकर्षणं सिद्ध्यति। अस्य ध्यानं त्रिकुट्यां सञ्चितम्। उभे नेत्रे देव्याश्चरणयुगं पश्यतः। जपप्रतापेन अम्बरं कम्पमानं भवितुमारब्धम्। दिनद्वयं यावत् श्रीरामः एकासने तस्थौ। जपानन्तरं इन्दीवरं समर्पयति। अष्टमे दिवसे ध्यानस्थं मन ऊर्ध्वोर्ध्वतरं संक्रममाणं ब्रह्माच्युत-शंकराणां स्तरमतिक्रमते। तेन सकलमपि ब्रह्माण्डं जितम्। देवता स्तब्धाः सञ्जाताः। तपःप्रभावात् जीवनस्य आरम्भाः दग्धाः सञ्जाताः! सप्तोत्तरैकशतम् इन्दीवराणि यथाविधानमद्यावधि पुरश्चर्याक्रमानुसारं जपानन्तरं दुर्गादेव्यै समर्पितानि। केवलमेकमेवारविन्द-मवशिष्यते। मनः सहस्रारचक्रं वेद्धुं सन्नद्धम् अस्ति।

निशीथे साक्षाद्भगवती दुर्गा आयाति। सहासं च पूजा-कमलं स्वकरेणैव गृहीत्वा विलीयते।

श्रीरामोऽन्तिमं जपं पूरयति। ध्याने जगज्जनन्या-श्चरणयुगलं पश्यन् निमीलितनयनः श्रीरामः कमलमाहर्तुं करमर्पयति। हन्त! तत्र कमलं नास्ति। अस्य मनः किञ्चित् चञ्चलतां भजते।

**रामः :** (नेत्रे उन्मीलयति। कमलमनवलोक्य मनाग् आतुरतां नाटयति।)अयं जपपूरणकालः। आसनत्यागाच्चासिद्धिः। किन्तु खलु करोमि!

(रामस्य प्रीरिकार्डेडध्वनिः)

(रामः साश्रुजलनयनतां नाटयति)

**रामस्य ध्वनिः :** धिगिदं जीवनम्। यद् विरोधमेव आप्नोति! धिङ् मम साधनाम्! यदर्थमेतावान् शोधो विहितः। (सकरुणं) जानकि! तवोद्धारः कर्तुं मया नापार्यत!

**वाचकः :** किन्तु क्षणविक्षोभेणानेन राघवेन्द्रस्य मनः पराजयं न स्वीकुरुते। तन्मायावरणं भित्त्वा बुद्धिदुर्गमुपतिष्ठते। विद्युद्गत्या श्रीरामस्य मनः किञ्चित्स्मरति।

**रामस्य ध्वनिः :** लब्धो मयोपायः। शैशवे माता मां सदैव राजीवलोचनं व्याहरति स्म। एवमधुनापि द्वे नीलकमले मत्सकाशे अवशिष्येते। मातर्भगवति दुर्गे! एकं नयनकमलं समर्पयित्वा पुरश्चरणमिदं पूरयामि। गृहाण एतन्मे अन्तिमं पुरश्चरणकमलम्। (इति / तूणीरस्थं ब्रह्मशरं पश्यति। तं च वामकरेण गृह्णाति। दक्षिणकरेण दक्षिणं नेत्रं स्पृशति। बाणेन लोचनं निस्सारयितुकामो भवति। अस्मिन्नेवान्तराले देवो आविर्भवति।)

**देवी :** (वरदमुद्रया) साधु साधक-धीर राम ! साधु ! धर्मधन, धन्योऽसि ! तवानेन दृढनिश्चयेन पूर्णेन तपसा च प्रीतास्मि ! पुरुषोत्तम ! ते विजयः सुनिश्चितः । एषाहं त्वयि विलीना भवामि। उत्तिष्ठ हे सद्धर्मप्रतीक ! अन्यायं जेतासि !

(राम उत्साहं दृढनिश्चयं च सूचयन्नुत्तिष्ठति। धनुर्गृह्णाति। सर्वे हनूमदादयः आगत्य प्रसन्नतां सूचयन्ति। सामूहिकस्वरेण गायन्ति अथवा ध्वनियन्त्रेण पूर्वाङ्कितं देवीस्तोत्रं नेपथ्यतः श्रावयितुं शक्यते तदनुसारं च पात्राणि भावाभिनयं सूचयन्ति :

यस्याः प्रभावमतुलं भगवाननन्तो
ब्रह्मा हरश्च नहि वक्तुमलं बलं च।
सा चण्डिकाखिलजगत्परिपालनाय
नाशाय चाशुभभयस्य मतिं करोतु ॥)



मुद्रक : देववाणी प्रिण्टर्स उत्तम नगर, नयी दिल्ली-११००५९

# 'पण्डितराजीयम्'

## (संस्कृतरेडियोनाटकम्)

लेखक : डा० रमाकान्त शुक्ल:

## पात्राणि

**जगन्नाथः** : पण्डितराजः, नाटकस्य नायकः। शाहजहानसभा-पण्डितः।

**शाहजहानः** : दिल्लीश्वरः, जगन्नाथस्याश्रयदाता।

**लवंगी** : शाहजहान-पालिता काचित् कन्या, जगन्नाथस्य प्रेयसी। पश्चात् पत्नी।

**लवंग्याः सखी**

**सम्राज्ञी** : शाहजहानस्य पत्नी।

**पण्डिताः** : असूयकः, प्रशंसकः, तटस्थश्च।

**प्रतीहारी,** )<br>
**मन्त्री, दूतः** ) शाहजहानस्यास्थानवर्तिनः।<br>
**भृत्यः** )

**बटुः** : पिपठिषुः ब्रह्मचारी। पश्चात् पण्डितराजस्य शिष्यः।

रमाकान्तशुक्लप्रणीतम्

# 'पण्डितराजीयम्'

(संस्कृतरेडियोनाटकम्)

**सूत्रधार-ध्वनिः :** भारतभूमिर्महापुरुषाणाम् जन्मस्थली। अस्याम् अनेके महापुरुषाः संजाता येषां यशोदीपेन समस्तमपि जगत्कान्तिमत् लक्ष्यते। यैर्जातिवर्णस्य देशस्य कालस्य चोपेक्षां कृत्वा मानवतायां दृष्टिर्न्यस्ता, यैश्च क्षुद्रविचाराः साहसपूर्वकं खण्डितास्तेष्वेव अन्यतमोऽभूत् पण्डितराजो जगन्नाथः। पण्डितराजो जगन्नाथः। अयं महाकविः बहुभिः राजभिः पूजितः। अस्य काव्यजातमद्यापि सहृदयानां शिरो नर्तयति। सम्राजः शाहजहानस्यापि सौभाग्यमासीद् यदयं महाकविस्तस्य राज्यसभां सभाजयत्—

(रथागमनध्वनिः। पदचापध्वनिः)

(द्वारि आगमन्)

(१)

**प्रतिहारी :** को भवान्? अत्रागमनस्य किं प्रयोजनम्?

**द्वारस्थः :** प्रतिहारि! श्रीमत्पेरमभट्टस्य सूनुर्जगन्नाथोऽहम्। यः खलु विविधशास्त्राण्यधीत्य श्रीमज्जहांगीरस्य राज्यसभा-निवाससुखमनुभूय तस्य महाप्रयाणे उदयपुराधीश्वरस्य श्रीमतो जगत्सिंहस्य सभागौरवं संवर्ध्य अधुना पुनरपि दिल्लीवल्लभपाणिपल्लवतले ससुखं काव्यसाधनां सम्पादयितुमुपस्थितः। किम् पातिसाहोऽधुनैव मां द्रष्टुं

सन्नद्धः ? इति पृष्ट्वा सूचनीयोऽहम् । स एव मा माहू-त्वान् । इद तस्य पत्रम् ।

**प्रतिहारी :** अये, जगन्नाथपण्डितस्य दर्शनं करोमि ? ननु धन्यमिदं राजभवनं यत्र पाण्डित्यं स्वयमेवोपस्थितम् । भवन्तः क्षणं प्रतीक्षन्ताम् । अहमधुनैव भवदागमनोदन्तं देवाय निवेद-यामि । (प्रयाति । पदचापध्वनिः)

(शाहजहानं प्रति) देव ! श्रीमत्पेरमभट्टसूनुः जगन्नाथ-पण्डित उदयपुरादागतः ।

**शाहजहानः :** अये, जगन्नाथपण्डितः समायातः ? सौभाग्यं ननु मुगलशासनस्य यदेवंभूतः पण्डितप्रवरस्तत्सभाजयितु-मायातः । अस्माभिरेव तत्सविधे निमन्त्रणं प्रहितमासीत् ।

**प्रतीहारी :** युक्तम्, स भवत्पत्रमपि ददर्श—

**शाहजहानः :** प्रतीहारि, स्वपितृशासनेऽपि अस्भाभिस्तस्य मृद्वीका-रसझरीसमा कविता आस्वादिता । त्वरितं सादरं प्रवेशयैनम् । एवम्भूतस्य कविशिरोमणेः द्वारि स्थितिः अस्माकं गौरवं खण्डयति । गच्छ !

**प्रतीहारी :** यथाज्ञापयति देवः । (प्रयाति । पदध्वनिः) (पण्डितं प्रति) पण्डितवर, पातिसाहो भवन्तं सौत्सुक्यं प्रतीक्ष-माणस्तिष्ठति । आगम्यताम् ।

**जगन्नाथः :** मार्गं दर्शय !

**प्रतीहारी :** इतः इतः । पातिसाहो भवतां प्रशंसां करोति स्म । अथवा भवतां का प्रशंसा ? पाण्डित्यस्य प्रशंसा तु स्वस्यैव प्रतिष्ठा । अयमस्ति पातिसाहः, अग्रे आयान्तु । भवदागमनं प्रतीक्षमाणो विष्टरादुत्थाय भ्रमति ।

**जगन्नाथः :** विजयताम् महाराजः ।

**शाहजहानः :** (करे गृहीत्वा) अये, पण्डितप्रवर जगन्नाथ ! चिराद् दृष्टोऽसि । ननु कुशली भवान् ? अत्रागमने कष्टं तु नानुभूतम् ?

**जगन्नाथः** : देव, कष्टं किम् ? कष्टं तु भवते दत्तम् !

**शाहजहानः** : पण्डितवर, मैवम्। ननु वयं तु भवन्तमुपलभ्य धन्या स्मः। अस्मत्पितृचरणमहाप्रयाणे मुगलसभां परित्यज्य यदाप्रभृति भवान् प्रयातस्तदाप्रभृति एव भवादृशं पण्डितमनुपलभ्य वयं केनापि सुकृतेनेव वञ्चिता आस्म। अधुना अत्रागमनेन भवतास्माकं प्रार्थनांगीकृता इति आह्लादस्य विषयः।

**जगन्नाथः** : भवत्पितृचरणश्रीनूरुद्दीनजहाँगीरस्य महाप्रयाणे आगरानगरे अव्यवस्था संवृत्ता। भवान् तु जानात्येव यत्साहित्यसर्जनं, पाण्डित्यसाधनं, काव्यप्रणयनादिकं च शान्तिमपेक्षन्ते। अत एवाहम् उदयपुराधीश्वरजगत्सिंहस्य सभायां गतः। तत्र च मया काव्यादिकं प्रणीतम्। कतिपयदिनपूर्वमेव भवत्संदिष्टमुपलभ्य मयात्रागमने मतिः कृता। अद्य च आगत्य भवते कष्टं दत्तम्।

**शाहजहानः** : अये नैवम् ! कष्टं तु भवता उदयापुराधीश्वरजगत्सिंहाय दत्तम् यो हि भवत्स्मृत्या निद्रामलभमानः यथाकथंचिद् रात्रिम् यापयन् स्यात्। ननु स भवत्प्रणीतं जगदाभरणं काव्यं स्मारं स्मारं कथमिव निद्रां लभेत ? पण्डितवर, श्रावय तु जगत्सिंहस्य वर्णनस्य कमप्यंशम् !

**जगन्नाथः** : परस्य नृपतेः विषये कथं नु शुश्रूषुर्भवान् ?

**शाहजहानः** : पण्डितवर, जानात्येव भवान् कवितायां परत्वममत्वभावना नैव भवति। यदि काव्यं काव्यमस्ति तर्हि तत् सार्वजनीनं भवति चेत्तत् कमप्यवलम्ब्य कृतं स्यात्। श्रावयतु किञ्चित्।

**जगन्नाथः** : वस्तुतः भवान् सहृदयः। शृणोतु—

विद्वांसो वसुधातले परवचःश्लाघासु वाचंयमाः
भूपालाः कमलाविलासमदिरोन्मीलन्मदाघूर्णिताः ।
आस्ये धास्यति कस्य लास्यमधुना धन्यस्य कामालस-
स्वर्वामाधरमाधुरीमधरयन् वाचां विलासो मम ॥

शाहजहानः : सूक्तम्·· ···

जग० : विद्राणेव गुणज्ञता समुदितो भूयानसूयाभरः
कालोऽयं कलिराजगाम जगतीलावण्यकुक्षिम्भरिः ।
एवंभावनया मदीयकविते मौनं किमालम्बसे
जागर्तु क्षितिमण्डलोपरि जगत्सिंहो धराधीश्वरः ॥

शाहजहानः : ननु धन्योऽयं जगत्सिंहोः यो हि भवल्लेखनीविषयः संवृत्तः, यश्च जरामरणादिभयविमुक्तेन यशःशरीरेण चिरकालं यावत्सृष्टौ स्थास्यति ।

जगन्नाथः : कवीनां सत्कारः सत्कर्तारममरीकरोत्येव ।

शाहजहानः : पण्डितवर, भवद्भिर्भोजनमपि कृतं न वा ? अहं तु भवदमृतकल्पानि वचांसि शृण्वन् भवद्भोजनादि-विषये विस्मृतिमेवापन्नः ।

जगन्नाथः : भोजनस्य न कापि चिन्ता । सूनृता वाणी एव तेषां भोजनम्, येन तेषां स्वाभिमानबुभुक्षा शाम्यति । सत्कार-जलेनैव तेषां तर्षः शाम्यते । तथापि-मत्पार्श्वे सर्वमपि अस्ति । उदयपुराधीश्वरेण अश्वरथे विविधपक्वान्नादिकं संस्थाप्याहं विसृष्टः । तत्रैव मदीयं काव्यादिकंमन्यदाव-श्यकं वस्तुजातं च सन्तिष्ठते ।

शाहजहानः : क्वासौ रथः ?

जगन्नाथः : राजभवनमारादेव तिष्ठति ।

**शाहजहानः** : प्रतीहारि, त्वरितमेव सारथेरनुरूपं स्वागतं विधाय कृतकशिपुं तं कुरु। पण्डितवर, भवदीयं वस्तुजातमपि भवत्कृते सुरक्षिते कक्षे यास्यति।

**जगन्नाथः** : मया तु विस्मृतमेव भवता सह वार्तालापे यत्सारथिरपि मया सह वर्तते! भवतु, अधुना भवानपि विश्रामं लभताम्। अहमपि शयनीयं गच्छामि।

**शाहजहानः** : बाढम्, प्रातःकाले सभायां भवन्तं द्रष्टुमुत्सुकाः स्मः।

**जगन्नाथः** : शुभा रात्रिः। प्रतीहारि निवासगृहस्य मार्गं दर्शयितुं कंचिद् भृत्यं प्रेषय।

**प्रतीहारी** : इत इतः पण्डितप्रवर, अयमत्र भवदाज्ञापालनोद्यतः भृत्यः।

**भृत्यः** : प्रणमामि पण्डितललामम्।

**जगन्नाथः** : शुभं भूयात्।

**प्रतीहारी** : अहं सारथेः व्यवस्थायै गच्छामि।

**जगन्नाथः** : बाढम्, साधय।

**भृत्यः** : इत इतः आगच्छतु। इदं भवत्कृते सुरक्षितं वासगृहम्।

**जगन्नाथः** : बाढम्। अहो, रमणीयं वासगृहम्।

**भृत्यः** : भगवन्, आसनम् सनाथीकरोतु। पादौ संवाहयामि ?

**प्रतीहारी** : (प्रविश्य) भगवन्, रथादानीतम् इदं भवतां ग्रन्थजातम्!

**जगन्नाथः** : बाढम्, प्रतीहारि. गच्छ त्वमपि विश्रामं कुरु।

**प्रतीहारी** : यथाज्ञापयति भवान्।

**जगन्नाथः** : (स्वगतम् ग्रन्थं विलोकयन्) इयं गंगालहरी, इयञ्चामृतलहरी, इयं करुणालहरी, इयं च लक्ष्मीलहरी, इयं च सुधालहरी, । इमा सर्वा अपि मामकीनायाः देवरतेः

प्रमाणम्। इदं च जगदाभरणं श्रेष्ठ-गुणानां सम्मानस्य प्रमाणम्। भगवति गंगे!

स्मृतं सद्यः स्वान्तं विरचयति शान्तं सकृदपि
प्रगीतं यत् पापं झटिति भवशापं च हरति।
इदं तद् गंगेति श्रवणरमणीयं खलु पदं
मम प्राणप्रान्तर्वदनकमलान्तर्विलसतु॥

## (२ शाहजहानस्य राज्यसभा)

**उद्घोषकः :** सावहिता भवन्तु, महाराजाधिराजः सम्राट् शाहजहानः सभाम् प्रविशति।

**सामन्ताः :** विजयताम् महाराजः।

**शाहजहानः :** (उपविश्य सिंहासने) उपविशन्तु सामन्ताः। मन्त्रिवर, अद्यास्माभिः पण्डितवरो जगन्नाथः सभाजनीयः। कश्चिद् भृत्यस्तं सादरमानेतुं प्रेष्यताम्।

**मन्त्री :** यथाज्ञापति महाराजः।

**शाहजहानः :** ननु धन्योऽयं मुगलवंशः यस्मिन् भारतं शासति न केवलं शासनदृष्ट्या देशः समुन्नतः, अपि तु साहित्य-दृष्ट्यापि अस्य औदात्त्यं दृश्यते। लोकनायकस्तुलसीदासः, अब्दुलरहीम खानखाना, जगन्नाथपण्डिततुल्याश्च अनेके विद्वांसः कवयश्च मुगलकुले भारतं शासति भारतभुवं धन्यांचक्रुः - इत्यस्मत्कृते परमं सौभाग्यम्।

**मन्त्री :** निश्चप्रचमेवमेव। देवस्यापि तु कविषु कलाकारेषु च अतीव स्नेहः। तदैव तु निशीथेऽपि कवयः समाद्रियन्ते।

**शाहजहानः :** मन्त्रिवर! अस्मन्मते तु मयूरसिंहासनादपि बहुमूल्यं कवेः सन्निधानम्। यतो हि मयूरसिंहासनमध्यास्य वयं वहिरंगदृष्ट्या शोभामहे किन्तु कविसान्निध्यमनुभूय वयमान्तरिकशोभामनुभवामः।

**मन्त्री :** युक्तं देव ।

**प्रतीहारी :** महाराज, पण्डितवरो जगन्नाथः सादरं दूतेन समानीयते ।

**शाहजहानः :** प्रतीहारि, क्वासौ ? अये, स आयाति । शोभनमस्य व्यक्तित्वं मे चेतो हरति ।
(जगन्नाथस्यागनम् । सामन्तेषु कर्णजापध्वनिः—
'अयं स जगन्नाथः । अयमेव स पण्डितः ?' 'आम्, अयमेव सः पण्डितः यं महाराज उदयपुरादाहूतवान्')

**जगन्नाथः :** जयतु दिल्लीवल्लभः । जयतु ।

**शाहजहानः :** आगम्यताम् पण्डितवर, स्वागतम् । इत आगम्यताम् ।

**मन्त्री :** पण्डितवर, महाराजेन भवते स्वर्सिहासनसन्निधाने एव आसनं संस्थापितम् ।

**शाहजहानः :** नन्वत्र किमाश्चर्यम् ? मन्त्रिवर ! कविर्विद्वान् वा कदापि भूपतेर्न्यूनो नास्ति । राजा तु स्वदेशे एव पूज्यते किन्तु विद्वान् सर्वत्र पूज्यते । राजा तु दण्डवलेन शरीरे शासनं करोति किन्तु कविः वाग्बलेन हृदये । पण्डितवर ! वयं भवतां सन्निधानमुपलभ्य अनुगृहीताः स्म । इदमासनम्, गृह्यताम् ।

**जगन्नाथः :** अनुगृहीतोऽस्मि । एकवारं पुनरपि मुगलराज्यास्थाने समागत्य तत्साहित्यप्रेम अनुभवामि ।

**शाहजहानः :** पण्डितवर, अहं स्वपितृसभायाः स्मरामि यत्र भवन्मुखान्मया काव्यं श्रुतमासीत् । अधुना किमपि पद्यं श्रावयतु ।

**जगन्नाथः :** महाराज, आकर्ण्यताम्—

> **समुत्पत्तिः स्वच्छे सरसि हरिहस्ते निवसनं**
> **निवासः पद्मायाः सुरहृदयहारी परिमलः ।**
> **गुणैरेतैरन्यैरपि च ललितस्याम्बुज तव**
> **द्विजोत्तंसे हंसे यदि रतिरतीवोन्नतिरियम् ॥**

**शाहजहानः** : साधु पण्डितवर, साधु। अन्या शुश्रूषा वर्द्धते।

**जग०** : नीरान्निर्मलतो जनिर्मधुरता रामामुखस्पर्धिनी,
वासः किञ्च हरेः करे परिमलो गीर्वाणचेतोहरः।
सर्वस्वं तदहो महाकविगिरां कामस्य चाम्भोरुह
त्वं चेत् प्रीतिमुरीकरोषि मधुपे तत्त्वां किमाचक्ष्महे॥

**शाहजहानः** : साधु, पण्डितवर! वस्तुतः त्वां प्रति ममानुरागस्य अभिव्यञ्जनमेतत्पद्ययुग्मे दृश्यते। प्रीतोऽहम्। भवते यदपि साहाय्यं ग्रन्थालोचनाय, काव्यप्रणयनाय, पाण्डित्य-समर्जनाय च अपेक्ष्यते तत्सर्वमस्माभिः ससुखं दास्यते।

**जगन्नाथः** : अहं संस्कृताग्रन्थानुशीलनेन साकमेव अरवी-पारसी भाषयोरप्यध्ययनं चिकीर्षुरस्मि। मानवभावानां सम्य-क्परिज्ञानाय-विविधभाषाणां साहित्यस्य तुलनात्मक-मध्ययनमावश्यकम्। कश्चिदेतद्भाषाविद् मह्यं नियोजनीयः।

**शाहजहानः** : अवश्यमेव। भवान् भाषान्तरविज्ञानां विविध-धर्मानुयायिनां च विचारसारैः परिचितः सन् स्वविचारैरपि तेषां तुष्टिं करोतु।

**जगन्नाथः** : तत्तु करिष्याम्येव। अधुना गमनाय अनुमतः स्याम्। भवन्तः शासनव्यवस्थामवलोकयन्तु। नाहं प्रत्यूहमुत्पा-दयितुमिच्छामि।

**शाहजहानः** : यथा भवते रोचते।

**जगन्नाथः** : शुभं भवते।



('संस्कृतपण्डितः अरवीशिक्षां गृह्णाति-एतदाश्चर्यम्' 'कथं महाराजः सत्स्वपि अन्येषु अरवीफारसीकविषु अमुं जगन्नाथमेवं वहु मन्यते' 'श्रूयते, स अतीव कुशाग्र-बुद्धिरस्ति अतित्वरया विदेशीयामपि भाषां गृह्णाति'

'मौलविनोऽपि तस्य मधां साश्चर्यमालोकयन्ति', 'नूनमयं पण्डितोऽस्मानधरीकरिष्यति', 'अये, श्रुतं भवता ? अद्य तु जगन्नाथपण्डितेन शास्त्रार्थे वहवो भाषान्तरविज्ञाः मतान्तरानुयायिनश्च विद्वांसो मूकीकृताः। अतएव शाहजहानमहाराजेन सः पण्डितराजपदवीदानेन सम्मानितः' 'राज्यसभायां शाहजहानमहाराजेन सहैव स तिष्ठति', 'अरे, जगन्नाथेन समं तु महाराजः चतुरङ्गमपि क्रीडति', 'तस्य तु राजभवनेऽव्याहतप्रवेशः' 'न केवलं सः राजकविः सभापण्डि ो वा अपितु स महाराजस्य अन्तरंगसखा अपि' 'अरे तस्य अनुपस्थितौ कथं गर्जनं तर्जनं कुरुथः ? तत्समक्षे तु न किमपि ब्रूत, यदि साहसमस्ति तर्हि तत्समक्ष तस्य असूयां कुरुत'। 'कोऽस्ति ततुल्योऽद्य साम्राज्ये, यो हि चतुर्मुखव्यक्तित्वेन मण्डितः स्यात् ?' 'तस्य कवितामाकर्ण्य सर्वेऽपि मूर्धानं धुन्वति' 'काव्यं तु स हेलयेव करोति' 'ननु निश्चयमेव स पण्डितराजः' 'अतीव रूपवानयं कविः यं दृष्ट्वैव कन्याः मन्मथाधिरूढा भवन्ति' 'श्रूयते लवंगी अपि तस्मिन् चित्तं निदधाति' 'यदि पातिसाहस्य कर्णयोरयमुदन्तः प्रहितो भवेत् तदा नूनं पण्डितराजः निर्वासितः स्यात्,' 'ननु लवगी तु महाराजस्य कुटुम्वकन्यैव' 'सम्म्राज्ञी अपि तस्यां वहु स्नेहं दधाति' - इति प्रशंसक-असूयक-तटस्थपण्डितानां ध्वनयः)

(३)

**लवंगी :** सखि, किमद्य मह्य कवितां न श्रावयिष्यसि ?

**सखी :** कथं न श्रावयिष्यामि लवङ्गि ! शृणु प्रत्यग्रां कविताम्...

**कस्तूरिकातिलकमालि विधाय सायं**
**स्मेरानना सपदि शीलय सौधमौलिम्।**

प्रौढिं भजन्तु कुमुदानि मुदामुदाराम्
उल्लासयन्तु परितो हरितो मुखानि ॥

**लवंगी :** शोभनम् । अतीव प्रभविष्णुतया प्रस्तौषि कवितां त्वम् ।

**सखी :** अन्यदपि श्रोष्यसि ?

**लवंगी :** नन्वत्र पि प्रश्नः ? उपकारायाप्यनुमतिं गृह्णासि ? ननु अमृतपूरितौ मे कर्णौ कुरु ।

**सखी :** शृणु

अयि मन्दस्मितमधुरं वदनं तन्वंगि यदि मनाक् कुरुषे ।
अधुनैव कलय शमितं राकारमणस्य हन्त साम्राज्यम् ॥

**लवंगी :** इमाः कविताः कुतः कुतोऽवधार्य आनयसि ?

**सखी :** तत एव यो ऽसौ अद्यत्वें ब्रूते—

यथा यथा तामरसेक्षणा मया
पुनः सरागं नितरां निषेविता ।
तथा तथा तत्त्वकथेव सर्वतो
विकृत्य मामेकरसं चकार सा ॥

**लवंगी :** मूढे ! शनकैर्वद ! कथं तारस्वरेण प्रलपसि ? यदि कश्चिच्छृणुयात् ?

**सखी :** मुग्धे ! कथं विभेषि? एताः कविताः त्वद्विषये न रचिताः ! लवङ्गि, व्यर्थमेव अभिमानदोलां कथमारोहसि ?

**लवंगी :** हतके ! मया कदा प्रतिपादितं यदिमाः कविता मद्विषयिण्यः सन्ति ?

**सखी :** मिथ्यावादिनि ! तर्हि कथं शनकैर्वक्तुमादिशसि ? शृणु सत्यम् इदानीम् । अहं सडिण्डिमघोषमुद्घोषयामि यदिमाः कविता लवंगीमेवाश्रित्य प्रणीताः, अद्यैव प्रणीताः, तेनैव पण्डितराजेन प्रणीताः, यो ह्यद्यत्वे—

**लवंगी :** अलं क्रूरे असम्वद्धप्रलपितेन ! (सखीमुखं हस्तेन स्थगयति) अथवा वाक्यशेषं पूरय। किमद्यत्वे ?

**सखी :** यो ह्यद्यत्वे भणति :—

**उपनिषदः परिपीता गीतापि च हन्त मतिपथं नीता ।**
**तदपि न हा विधुवदना मानससदनाद् बहिर्याति ॥**

(लवंगी लज्जां आह्लादञ्च नाटयति)

कुत्र विलीनासि ? किम् विस्मृतं त्वया यदद्य सम्राज्ञाः पुरतस्तव नृत्याभ्यासः परीक्ष्यते। ननु नृत्यकाले तमेव स्मृत्वा पदभंगं मा कार्षीः अन्यथा—

**लवंगी :** अलं प्रतिक्षणं परिहासेन। चल सम्राज्ञीं प्रति प्रतिष्ठावः।

**(४ राजप्रासादः। सम्राज्ञाः विश्राम कक्षः)**

**शाहजहानः :** सम्राज्ञि, ननु कुशलिनी भवती ?

**सम्राज्ञी :** सर्वमपि कुशलं यदि भवन्तः प्रष्टारः। अद्यत्वे तु भवन्तः पण्डितराजस्य कवितामेवाभिलषन्ति न तु माम्। पण्डितराजस्य कविता तु मन्ये मदीया सपत्नी जाता।

**शाहजहानः :** (विहस्य) वस्तुतः सः करोत्येव एवंविधां कविताम् यां निपीय मृद्वीकारसझरीमपि नाद्रियते सहृदयः। अतीव मेधावी अयं जगन्नाथः यो हि सुकुमारवस्तुनि साहित्ये न्यायग्रहग्रन्थिले च तर्के समानाधिकारी। भवतीमपि तस्य कवितां श्रावयिष्यामि।

**सम्राज्ञी :** मया तत्कविता श्रुता वर्तते। अतीव मनोहारिणी।

**शाहजहान :** कदा श्रुता ? कस्य मुखेन ?

**सम्राज्ञीः :** लवंग्या श्राविता। सैव कुतश्चिच्छ्रुत्वा समायाता। इमं श्लोकं श्रावयति स्म—

**नितरां परुषा सरोजमाला न मृणालानि विचारपेशलानि ।**
**यदि कोमलता तवाङ्गकानामथ का नाम कथापि पल्लवानाम् ॥**

**शाहजहानः :** अये ! लवंगी तु नितान्तं मेधाविनी या हि पण्डित-राजस्य कवितां भवत्सम्मुखे स्थापितवती। ननु सा स्वयमपि तु काव्यं करोति ! संस्कृतेऽपि तस्या रुचिरस्त्येवा-बाल्यादेव ! अस्तु, अन्यदपि किंचित्कथयति स्म सा ?

**सम्राज्ञी :** कथयति तु न स्म किन्तु व्यनक्ति स्म।

**शाहजहानः :** किम् ?

**सम्राज्ञी :** पण्डितराजे स्वकीयमनुरागम्। मया तु इदमपि ज्ञातं यत्सा कदाचित्पण्डितराजं संस्कृतकविताशिक्षायै प्रार्थित-वत्यपि। प्रमत्ता इव संवृत्तास्ति सा। यदाप्रभृति पण्डितेन्दु-र्विलोकितस्तदाप्रभृत्येव तस्या लोचनचकोराभ्यां चांचल्य-मुररीकृतम्। इयं तस्या दशा। पण्डितराजस्य को मनो-भावः इति भवन्तः जानन्तु।

**शाहजहानः :** हुं, इद रहस्यम् ! तदैव तु पण्डिराजोऽद्यत्वे रसराज-कवितां करोति। मन्ये, गुरुजनभयं द्वयोरपि प्रीतिं समधिक-तरां विदधाति। यद्यपि स्पष्टं तु पण्डितराजेन न भणितं किन्तु कविताद्वारा तस्य लवंगीप्रेम व्यज्यते - इति मे विश्वासः।

**सम्राज्ञी :** एवम् ? तदा तूभयनिष्ठं प्रेम !

**शाहजहानः :** प्रेम अपि कियच्चतुरम् - स्वकीयं क्रीडास्थलं सर्वत्रैव अन्वेषयति। प्रहरिभिः परिवृतेऽपि राजभवने प्रेमियुग्मं क्रीडां करोति। प्रेम्णि नापि राज्यांकुशः नापि गुरुजनां-कुशः। यदि कोऽप्यंकुशस्तत्रारोप्यते तर्हि तस्य वृद्धिरेव भवति।

**सम्राज्ञी :** अस्य प्रेमियुग्मस्य किं भविष्यद् भवन्मते ?

**शाहजहानः :** सम्राज्ञि, द्वयोरपि मंगलमस्मत्प्रियम्। पण्डितराजोऽपि स्वकीयः, लवंगी अपि स्वकीया एव। आबाल्यादियं कन्या-ऽस्माभिः सुतेव परिपाल्यते। कोऽपि न जानाति यत् कस्येयं

श्रुता ? पयोमुखी बाला अधुना यौवने पदं दधाति। तस्याः प्रीत्यर्थं वयं सर्वमपि कर्तुं व्यवसिताः। किमु सा पण्डितराजस्य विषये अन्यदपि किंचित्कथयति स्म ?

**सम्राज्ञी** : कथमिदं सम्भाव्यते-यत्सलज्जा बाला वाचा सर्वमपि कथयेत् ? यो नाम प्रेमाभिभूतायाः आकारेण इंगितैः गत्या चेष्टया नेत्रवक्त्रविकारैश्च अन्तर्गतं मनो न वेत्ति-सः स्पष्टाभिधानेनैव किं ज्ञास्यति ? मया यज्ज्ञातमस्ति तत्प्रामाणिकम्। अहमिव भवन्तं सा पण्डितराजं वीक्ष्य, अनुश्रुत्य सम्भाष्य च अन्यथैव संवृत्ता। तयोर्मेलनं प्रेमानुरागाभिज्ञैर्भवद्भिरवश्यमेव सम्पादनीयम्।

**शाहजहानः** : (सहासं) यथा भवत्यै रोचते ! (गम्भीरः सन्) किन्तु पण्डितसमाजः कथमिव पण्डितराजमनुज्ञास्यति यवनपालितां कन्यां ग्रहीतुम्-इति प्रश्नः। अथवा भवतु, यदि प्रकृष्टं प्रेम द्वयोस्तदा तु न कोऽपि तौ वारयितुं शक्नोति, यदि केवलं रूपासक्तिरेव तदा अन्यथा सम्भावना। गच्छामि विश्रामकक्षे। मया पण्डितराजः चतुरंगक्रीडार्थमामन्त्रितोऽस्ति।

**सम्राज्ञी** : विश्रामस्तु अत्रापि कर्तुं शक्यते ! किन्तु अद्यत्वे तु भवन्तः मत्तः दूरमेव तिष्ठन्ति। प्रातःकालेऽपि तस्यैव कविता, रात्रावपि। अधुना मध्याह्न-विश्रामवेलायामपि पण्डितराजेन सार्धं चतुरंगक्रीडा।

**शाहजहानः** : (विहस्य), सम्राज्ञि, ननु भवती तु मम मानसे सदैव तिष्ठति। किन्तु पण्डितराजः चतुरंगक्रीडायामतीव चतुरः; अतस्तेन साकं क्रीडायामतावानन्दानुभूतिर्जायते। अधुना अनुमतः स्याम् ?

**सम्राज्ञी** : साधु, अनुमताः। मयापि लवंगी आहूता वर्तते। मध्याह्नविश्रामवेलायां मुग्धायास्तस्या वचनावलीः श्रुत्वा परमं

मोदं मदं च लभे। सापि अद्यत्वे काव्यनिर्माणे अतीव चतुरा इव लक्ष्यते। अद्य तस्याः काव्याभ्यासे नृत्याभासे च मया परीक्षा निर्धारितास्ति।

(ततः प्रविशति सखीसहिता लवङ्गी।)

**लवंगी :** (प्रविश्य) नमस्करोमि अत्रभवन्तौ।

**सम्राज्ञी :** अये ! लवंगी संप्राप्ता ?

**शाहजहानः :** लवंगि, तवैव चर्चा प्रवर्तते स्म ! (लवङ्गी स्तब्धतां नाटयति) अस्माभिः श्रुतं यत्त्वमद्यत्वे अतीव पटुः संजाता ? (लवङ्गी विवर्णतां नाटयति) काव्याभ्यासे नृत्याभ्यासे च। (लवङ्गी समाश्वस्ततां नाटयति) श्रावय तु किंचित् पद्यम्। (लवंगी संकोचं नाटयति)

**सम्राज्ञी :** ननु श्रावय ? किमर्थं लज्जसे ? त्वयि महाराजस्य अतीव वात्सल्यम् !

**लवंगी :** पद्यद्वयमद्यैव लिखितम्। कीदृशमिति तु भवन्त एव जानन्तु—

**पंकज ! तव लघुजातिः, सन्ति गुणास्ते च मोदाद्याः।**
**कज्जल ! तव खलु जन्म, दीपात्तस्मिन् कलंकस्त्वम्॥**
**लोकेऽखिलवस्तूनां गुणाः क्रियाश्चैव पूज्याः स्युः।**
**नो जातिर्न च नाम कज्जलपंकेरुहाणामिव॥**

**सखी :** (लवङ्गीं प्रति) अनया नीरसया अवकरोपमितया शब्दयोजनया न ते कवित्वं सेत्स्यति। ननु अन्यां काञ्चित् रसभावभरितां कवितां श्रावय। (शाहजहानं प्रति) महाराज ! अनया अद्यत्वे नवनवानि बहूनि रसभावभरितानि पद्यानि कण्ठीकृतानि। अहमपि अस्याः संसर्गेण काव्यज्ञा संवृत्तास्मि। कदाचिदावयोः काव्यपाठप्रतिस्पर्द्धामायोजयतु देवः।

**शाहजहानः** : शोभनः प्रस्तावः। सम्राज्ञि, भवतो एतां काव्यपाठ-स्पर्धामायोज्यं मां सूचयतु। (लवगीं प्रति) लवङ्गि, वयं तवः काव्यपाठेन प्रभाविता स्मः।

**सम्राज्ञी** : वस्तुतः लवंगि, त्वं तु कवयित्री जायमाना दृश्यसे? कः खलु तव काव्यशिक्षकः?

**शाहजहानः** : सम्राज्ञि, चलाम्यहम्! अयं तस्यागमनस्य समयः!

**सम्राज्ञी** : बाढम्! संनिहितमेव भवतां विश्रामगृहम्। यदि तर्षादिकं बाधेत तर्हि आज्ञापयन्तु।

**शाहजहानः** : युक्तम्!

## (५)

## (शाहजहानस्य विश्रामगृहम्)

**जगन्नाथः** : (प्रविश्य) विजयताम् महाराजः!

**शाहजहानः** : स्वागतं पण्डितपते! आस्यताम्। अद्यत्वे किं किं व्यवस्यते?

**जगन्नाथः** : सद्य एव मया 'आसफ़विलासो' विरचितः।

**शाहजहानः** : गद्ये पद्ये वा?

**जगन्नाथः** : द्वयेऽपि।

**शाहजहानः** : शोभनम्! अन्यत् किं विरच्यते?

**जगन्नाथः** : रसगंगाधरनामा साहित्यशास्त्रीयग्रन्थः प्रारिप्सितः। तत्कृते एव बहूनि पद्यानि लिख्यन्ते। स्वतंत्ररूपेणापि कानिचित्पद्यानि प्रणीतानि।

**शाहजहानः** : अपि श्रावयिष्यति भवान् पद्यमेकम्?

**जगन्नाथः** : नूनम्, यदि शुश्रूषवो भवन्तः।

> तन्मंजु मन्दहसितं श्वसितानि तानि
>
> सा वै कलंकविधुरा मधुराननश्रीः।

अद्यापि मे हृदयमुन्मदयन्ति हन्त
सायन्तनाम्बुजसहोदरलोचनायाः ॥

(सम्राज्ञाः कक्षे सम्राज्ञी : लवंगि, शृणोषि पण्डितराजस्य कविताम् ? लवंगी : अहं तु श्लोकस्पर्द्धार्थं श्लोकान् चिन्तयामि ।)

शाहजहानः : पण्डितराज, केय सायन्तनाम्बुजसहोदरलोचना ?

(सम्राज्ञाः कक्षे : 'पातिसाहस्य प्रश्नमतिसावधानतया शृणोषि लवंगि' - इति सम्राज्ञाः ध्वनिः)

जगन्नाथः : कवेः सृष्टौ कल्पनासाम्राज्यम्-यद्बलेन स एवंविधां सायन्तनाम्बुजसहोदरलोचनां नयनपथमानयति ।

शाहजहानः : (स्वगतम्) गोपनचतुरोऽस्ति पण्डितराजः । (प्रकाशम्) अन्यामपि कवितां श्रावयतु ।

जगन्नाथः :

गुरुजनभयमद्विलोकनान्तः समुदयदाकुलभावमावहन्त्याः ।
दरदलदरविन्दसुन्दरं हा हरिणदृशो नयनं न विस्मरामि ॥

शाहजहानः : उत्तमम् ! प्रतीयते कोऽपि वास्तविकोदन्तो निवद्धोऽस्मिन् पद्ये (स्वगतं) सम्राज्ञी सत्यमेव भणति स्म ।

(सम्राज्ञाः कक्षे)

(सम्राज्ञी : लवंगि कीदृशं पद्यम् ?

लवंगी : मया तु किमपि न श्रुतम्' : ।

सम्राज्ञी : मिथ्या वदसि ?

लवंगीः : युक्तम् ।)

शाहजहानः : पण्डितराज ! भवतां कविताामाकर्ण्य तु शुश्रूषा वर्द्धत एव नेयं शाम्यति । अन्यामपि कांचित् कवितां श्रावयतु ।

जगन्नाथः :

इत एव निजालयं गताया वनितायाा गुरुभिः समावृतायाः ।
परिवर्तितकन्धरं नतभ्रु स्मयमानं वदनाम्बुजं स्मरामि ॥

**शाहजहानः** : पण्डितराज, क्वेदं लोकावेक्षणं क्रियते यस्य प्रतिफलनं काव्ये सञ्जायते ?

**जगन्नाथः** : महाराजेनाहं चतुरंगक्रीडार्थमाहूतोऽथवा पद्यश्रावणार्थम् ? मन्ये, हीयते क्रीडावेला । चतुररंगक्रीडा प्रारभ्यताम् ।

**शाहजहानः** : ओः, वरम् (स्वगतं) शीलवानयं पण्डितराजो यो हि प्रियावृत्तान्तं स्पष्टतो नैव भणति (प्रकाशं) सज्जीभवतु भवान् चतुरंगक्रीडार्थम् । भवत एव प्रथमा गतिः ।

**जगन्नाथः** : अयं पदातिः ।

**शाहजहानः** : अयमश्वः ।

**जगन्नाथः** : पुनरपि पदातिः ।

**शाहजहानः** : अस्माकमपि पदातिः ।

**जगन्नाथः** : अयमुष्ट्रः ।

**शाहजहानः** : अयमश्वः ।

**जगन्नाथः** : इदमाक्रमणम् ।

**शाहजहानः** : ओः, इयं सुरक्षा ।

**जगन्नाथः** : (सगुञ्जनं) पुनः पदातिः ।

**शाहजहानः** : किं सगुञ्जनं मनस्यैव गीयते ? प्रकाशं श्रावयतु । चतुरंगक्रीडायाः कवितायाश्च रसः युगपदेव आस्वाद्येत ।

**जगन्नाथः** : (स्वगतं) मत्कवितायामासक्तः पातिसाहोऽधुना चतुरंगगतिं नावधारयिष्यति, (प्रकाशम्) श्रावयामि ।

> तदवधि कुशली पुराणशास्त्र-
> स्मृतिशतचारुविचारजो विवेकः ।
> यदवधि न पदं दधाति चित्ते
> हरिणकिशोरदृशो दृशोर्विलासः ।।

(सम्राज्ञाः कक्षे-सम्राज्ञीः ननु शृणोसि लवंगि ?

लवंगी : शृणोमि)

**शाहजहानः** : उत्तमम् (स्वगतम्) यथार्था अभिव्यक्तिः।

(प्रकाशं) पण्डितराज, पुरस्काररूपेण किं दीयेत ?

**जगन्नाथः** : भवत्कृता प्रशंसैव पुरस्कारः। न हि वयं कवयो धनवैभवमेव परमं पुरस्कारं मन्यामहे। अस्तु, भवता तु गतिरेव विस्मृता।

**शाहजहानः** : ओः ! अधुना तु भवान् जेतव्यो विद्यते। अयं पदातिः।

**जगन्नाथः** : तर्हि अत्रभवन्तो मां जेतुकामाः स्वगतिकौशलेन। (स्वगतं) मां तु केवल सैव जेतुं शक्नोति यस्या प्रत्येकमिंगितं मनसि स्मारं स्मारं मदाविष्ट इव भवामि। न जाने कदा सा नवनीतकोमलांगी—

**शाहजहानः** : किं चिन्तयति पण्डितराजः ? गतिं प्रत्युत्तरयतु।

**जगन्नाथः** : गतेरुत्तरमेव चिन्तयामि। अयमुष्ट्रः।

**शाहजहानः** : अधुना भवान् पराजितो भविष्यति।

**जगन्नाथः** : यदा भविष्यामि, तदा भविष्यामि। गृह्यताम्। इदमाक्रमणम्।

**शाहजहानः** : ओः विषमा गतिः प्रदर्शिता भवता। तर्षाकुलोऽहम्। पेयं वाञ्छामि। कः कोत्र भोः ? पेयम्।

(सम्राज्ञाः कक्षे सम्राज्ञोः-लवंगि, महाराजस्तर्षाकुलः संवृत्तः। दासी मया क्वचित्प्रहिता वर्तते। गच्छ, त्वमेव पेयं नय। ननु कथं लज्जसे ? गच्छ, तत्रैव तव पण्डितराजोऽपि। त्वरित गच्छ।

लवंगीः-यथाज्ञापयति सम्राज्ञी।)

**जगन्नाथः** : एकस्यामेव गतौ तर्षाकुलः संवृत्तः महाराजः ?

**शाहजहानः** : गृह्यतामुत्तरम्, इदमाक्रमणम्—

**लवंगी** : (प्रविश्य) महाराज इदं पेयम् ।

**जगन्नाथः** : (स्वगतम्) अधुना परास्तोऽसि । विषमा गतिः । न क्वचिदपि सुरक्षा । न क्वापि शरणम् ।

**शाहजहानः** : लवंगि, त्वमेवं कथं पेयं नीत्वा उपस्थिता ?

**लवंगी** : महाराज, पेयवाहिनी दासी सम्राज्ञ्या क्वचित् कार्यार्थं नियोजिता । तयैवाहमत्रभवद्भ्यः पेयं दातुं प्रेषिता ।

**शाहजहानः** : बाढम् देहि पेयम् । पण्डितराज ! गतिं प्रतिकरोतु । तूष्णीं कथं तिष्ठति भवान् ?

**जगन्नाथः** : अधुना त्वहं परास्तोऽस्मि । विवशोऽस्मि । विषमा गतिः प्रदर्शिता भवता । को नामास्या विषमाया गतेः पुरस्तात्परास्तो न स्यात् ? आत्मसमर्पणं करोमि ।

**शाहजहानः** : भवतु, भवानपि पानार्थी ?

**जगन्नाथः** : (स्वगतं) पानं तु करोम्येव-सौन्दर्यस्य न तु पेयस्य । (प्रकाशं) कथं पंक्तिभेदं कुर्याम् ? लवंगि, दीयताम् पेयम् ।

**लवंगी** : (स्वगतं) अये पण्डितराजं वीक्ष्य शरीरे मनसि च अन्यदिव भवति । नापि स्थातुं नापि च गन्तुं मे शक्तिः ।

**शाहजहानः** : लवंगि, ननु पण्डितराजाय पेयं देहि—

**लवंगी** : प्रस्तुतं पेयम् (पात्रकम्पनध्वनिः) ।

**शाहजहानः** : लवंगि, पण्डितराजाय पेयदानकाले तव हस्ते कम्पः कथं सञ्जायते ?

**लवंगी** : (स्वगतं) पातिसाहेन निगृहीतास्मि । (प्रकाशं) देव एकस्मिन् हस्ते पात्रं द्वितीये च चषकं निश्चलतया ग्रहीतुं न शक्नोमि । अत एव कम्पः ।

**शाहजहानः** : युक्तम् ! पण्डितराज ! पेयं कीदृशम् ?

**जगन्नाथः** : शीतलमपि, तर्षकरमपि । अतीव स्वादु ! (मुखशब्दः)

**शाहजहानः :** पण्डितराज, चतुरंगक्रीडायां पराजितो भवान् । अधुना दण्डनीयः स्यात् ।

**जगन्नाथः :** कथमिव ?

**लवंगी :** (स्वगतं) न जाने कं दण्डं दास्यति देवः पण्डितराजाय ।

**शाहजहानः :** पण्डितराज, कवितां श्रावयतु दण्डरूपेण ।

**जगन्नाथः :** (स्वगतं) इदं तु मामकीनमेव मनोगतं पातिसाहेनोद्गीर्णम् । (प्रकाशं) यथा देव आज्ञापयति । एष कवितां प्रस्तौमि । परं प्रथममहमन्यदपि पेयमभिलषामि ।

**शाहजहानः :** लवंगि, पण्डितराजाय अन्यदपि पेयमानय ।

**लवंगी :** यथाज्ञापयति महाराजः ।

**जगन्नाथः :** इयं सुस्तनी मस्तकन्यस्तकुम्भा
कुसुम्भारुणं चारुवासो दधाना ।
समस्तस्य लोकस्य चेतःप्रवृत्ति
गृहीत्वा घटे न्यस्य यातीव भाति ।।

**लवंगी :** (स्वगतं) कवितामाकर्ण्य मनश्चरणौ च पश्चादेव प्रयान्ति नत्वग्रे ।

**शाहजहानः :** सूक्तम् । पण्डितराज, वयं भवतः कविताकौशल निशम्य तुष्टाः यथाभिलषितं ते दास्यामः । ब्रूहि मनोगतम्

**लवंगी :** (प्रविश्य) इदं पेयम् ।

**जगन्नाथः :** (स्वगतं) कथं याचे ?

**शाहजहानः :** ननु ब्रूहि निःशङ्कम् ?

**जगन्नाथः :** (स्वगतं) अयमेवावसरो गुरुजनपराधीनां लवंगीं प्राप्तुम् (प्रकाशं) देव, यदपि याचे तद् दास्यसि ?

**शाहजहानः :** अवश्यम् । 'ननु दिल्लीश्वरोऽहम् ।

**जगन्नाथः :** तर्हि श्रूयताम्—

न याचे गजालिं न वा वाजिराजिं
न वित्तेषु चित्तं मदीयं कदाचित् ।
इयं सुस्तनी हस्तविन्यस्तकुम्भा
लवङ्गी कुरङ्गीदृगङ्गीकरोतु ॥
इयं सुस्तनी मस्तकन्यस्तहस्ता
कुसुम्भारुणं चारु वासो वसाना ।
अरंभासमानापि रम्भासमाना
लवङ्गी कुरङ्गीदृगङ्गीकरोतु ॥

**लवंगी :** (स्वगतं) अये कीदृशं श्रृङ्गारमुद्गिरति पातिसाहसमक्षं पण्डितराजः । न जाने देवः किं भणति ? यदि स्वीकरोति तदा जीवनम्, यदि निषिद्ध्यति तर्हि मरणम् ।

**शाहजहानः :** पण्डितराज, भवान् पण्डितः, लवंगी च यवनपालिता । कथं भवान् तां कामयते ?

**जगन्नाथः :** (स्वगतं) इयं नवनीतकोमलांगी यदि मया प्राप्यते तर्हि स्वर्गराज्यमपि तिरस्करोमि । (प्रकाशं) सौन्दर्यं प्रेम च जातिविशेषं नाद्रियेते । यवनी वा स्यात् लवंगी अन्यजातीया वा स्यात्,-मन्मते तु सा केवलं लवंगी, निरुपाधिर्लवंगी । अधुना किं गोपयामि ? यदा प्रभृति इयं मयावलोकिता तदाप्रभृत्येवेयं मामकीनकवितायाः प्रेरणा सञ्जाता । अधुनेयं मम पत्नी भवतु इति कामये ।

**शाहजहानः :** पण्डितराज, आश्चर्यकरी भवतो याचना । परं किमियमेकनिष्ठा रतिस्तु नास्ति ? लवंग्या अभिमतमपि तु ज्ञेयम् । (लवंगीं प्रति) लवंगि, पण्डितराजस्य याचना तवाभिमता न वा ? अस्माभिरियं याचना पूरणीया ?

**लवंगी :** यदा देवेन प्रथमं वचो दत्तं तदा तु याचना पूर्णा एव ।

**शाहजहानः :** (विहस्य) भवन्तावुभावपि चतुरौ । प्रेमपरीक्षायां

समुत्तीर्णो । पण्डितराज, भवते लवंगी प्रदत्ता । इयमस्म-त्पालिता कन्या सुखिनी स्यात् । शुभं कामये भवतोः । लवंगि, धन्यासि पण्डितेन्द्रकल्पद्रुमं प्राप्य ।

**जगन्नाथः :** दिल्लीश्वरो वा जगदीश्वरो वा
मनोरथं पूरयितुं समर्थः ।
अन्यैर्नृपालैः परिदीयमानं
शाकाय वा स्याल्लवणाय वा स्यात् !

**नेपथ्ये :** पण्डितानां ध्वनयः-'अब्रह्मण्यम् अब्रह्मण्यम् । तैलंगान्वये जगन्नाथेन कलंकायितम् यवनीपरिणयेन' 'क्व ब्राह्मणवंशः क्व च यवनीस्पर्शः ? किमु तस्य अन्यत्र विवाहो नैव भवति स्म ?'ननु राजसम्मानेनोपचितः सन् विमूढो जातः, 'पण्डितराजोपाधिलाभाभिमानिनो जगन्नाथस्य समाजात् वहिष्कारः क्रियताम् ।'

**अपरो ध्वनि :** अये पण्डितराजसदृशा मानवाः युष्माकं वचांसि नापेक्षन्ते । ते तु सार्वभौमाः युष्माकं वचांसि उपेक्षन्ते । यदि साहसश्चेत्तर्हि तत्समक्षं गत्वा तस्य वहिष्कारः कुरुत ।

**प्रथमो ध्वनिः :** गम्यते तत्सकाशमेव । तस्यैव द्वारि तस्य वहिष्कारं करिष्यते ।

## (६ पण्डितराजगृहम्)

**जगन्नाथः :** लवंगि, वस्तुतः अद्य इदं गृहं गृहं संवृत्तम् यत्र त्वं गृहिणीरूपेण मयासादिता—

हरिणीप्रेक्षणा यत्र गृहिणी न विलोक्यते ।
सेवितं सर्वसम्पद्भिरपि तद् भवनं वनम् ।

**लवंगी :** पातिसाहेनापि आवयोः कामना पूरिता । अहं तु बिभेमि स्म । यदाप्रभृति मया भवतः कविता सखीमुखेन श्रुता

यदा चैकवारं भवान् विलोकितः संभाषितश्च तदाप्रभृत्येव अहं तु अवसरम् अन्वीक्षमाणा आसम् भवत्सान्निध्यं प्राप्तुम् । अधुना तु भगवता मम मनोरथः पूर्णः ।

**जगन्नाथः** : अहमपि त्वां वीक्ष्य प्रतिपलम् अनुचिन्तयामि स्म

आगतः पतिरितीरितं जनैः
शृण्वती चकितमेत्य देहलीम् ।
कौमुदीव शिशिरीकरिष्यते
लोचने मम कदा मृगेक्षणा ॥

**लवंगी** : अधुना नु भवच्चिन्तितं सर्वमपि नित्यमेव व्यवहार-परिणतिमेष्यते ।

**जगन्नाथः** : लवंगि, वस्तुतोऽहं धन्योऽस्मि यस्य त्वं गृहिणी ।

सानुकम्पाः सानुरगाश्चतुराः शीतशीतलाः ।
हरन्ति हृदयं हन्त कान्तायाः स्वान्तवृत्तयः ॥
लभ्यते पुण्यैर्गृहिणी मनोज्ञा
तया सुपुत्राः परितः पवित्राः ।

**लवंगी** : अलम् इदानीमेव अनया कल्पनया ।

(द्वारि खटखटायते । असूयकपण्डितध्वनिः - पण्डितराज, द्वारमुद्घाटय । वयमुच्चकुलोद्भवाः पण्डिताः यवन्या साकं तव विवाहं नानुमन्यामहे । तव ब्राह्मणसमाजतो बहिष्कारः क्रियते ।)

**जगन्नाथः** : लवंगि, दुर्भाग्यं भारतस्य यत्रैवंविधा प्रवृत्तयः वैर-भावं परिपोषयन्ति । अस्तु, द्वारमुघाट्य एतेभ्यः पण्डित-म्मन्येभ्यः सम्यगुत्तरं ददामि ।

(द्वारमुद्घाट्य) आगम्यताम् पण्डिताः । स्वागतम् !

**असूयकपण्डितः** : न वयं यवनीस्पर्शपांसुलस्य भवतो गृहं प्रविशामः । भवान् हि ब्राह्मणसमाजतो बहिष्कृतः इति निर्णयसूचनार्थं वयमत्र समुपस्थिताः । पण्डितराज, किमु

स्वजातौ भवान् पत्नीं प्राप्तुमसमर्थ आसीत् ? यदेवं यवनीं गृहीतवानस्ति ।

**जगन्नाथः :** 'कन्यारत्नं दुष्कुलादपि ग्राह्यम्' इति भवतामेव पण्डितानामुद्घोषः, 'उदारचरितानां तु वसुधैव कुटुम्बकम्'- इत्यपि भवतामेव विचारः। एवं स्थिते मया कतमोऽनर्थः सम्पादितः ? लवंगी रूपयौवनसम्पन्ना, सुशीला, पतिप्रेम-परायणा, प्रिया, प्रियवादिनी च। अन्यत् किं काम्यते पत्न्याम् ? पुनश्च भवन्मते वंशगतिस्तु पत्युः कुलानुसारेण न तु पत्न्याः ।

**असूयकपण्डितः :** वयं सिद्धान्तवादं न शृणुमः । यदस्माभिर्निर्णीतं तत्कथितम् । (सहागतान् पण्डितान् प्रति) चलन्तु सर्वे । समाजबहिष्कृतः -सन् पण्डितराजः पश्चात्तापवह्नौ ज्वलतु ।

**सर्वे :** ज्वलतु

**जगन्नाथः :** पण्डिताः, मदीयपाण्डित्येन खिन्ना भवन्तः अमुमवसरं प्राप्य मदीयं शोषणं कर्तुमुद्यताः । बाढम्, कुर्वन्तु भवन्तो मम बहिष्कारम् । अहं भवतः उपेक्षे । यदि शक्तिरस्ति तर्हि पाण्डित्यबलेन मां पण्डितराजितो बहिष्कुर्वन्तु ।

**पण्डितः :** एवंविधपतितपण्डितेन साकं को नाम शास्त्रार्थं कुर्यात् ? धिक् पण्डितराजम् ! गच्छामः (इति निष्क्रान्ता, पण्डिताः)

**लवंगी** . नाथ ! मत्कृते भवता एवंविधस्तिरस्कारः सोढः ! मया मन्द-भाग्यया भवान् कियान् कलंकितः ?

**जगन्नाथः :** अयि मूढे। त्वमपि एवं भणसि ? किमेवं चिन्ता-कुलासि ? जीवनं सहर्षं यापय—

**अयि मन्दस्मितमधुरं वदनं तन्वंगि यदि मनाक् कुरुषे ।**
**अधुनैव कलय शमितं राकारमणस्य हन्त साम्राज्यम् ।**

**लवंगी :** (सोच्छ्वासम्, सहासम्) सौभाग्यं मे यत् पण्डितराजस्य कविताया विषयोऽहम् सञ्जाता ।

**जगन्नाथः :** लवंगि, विश्रामगृहे चलतु । तत्रैव त्वामवलम्ब्य विरचिता अन्या अपि कविताः श्रावयिष्यामि ।

**लवंगी :** चलन्तु ।

**जगन्नाथः : तिमिरशारदचन्दिरचन्द्रिका-**
**कमलविद्रुमचम्पककोरकाः ।**
**यदि मिलन्ति कदापि तदाननं**
**खलु तया कलया तुलयामहे ।।**

**(७ पण्डितराजस्य अध्ययनकक्षः)**

**लवंगी :** अये ध्यानमग्न तपस्विन् । इदं पेयम्, गृह्यताम् ।

**जगन्नाथः :** अये लवंगि ! त्वम् ? देहि पेयम् ! (पीत्वा) उत्तमम् । ननु त्वं तु सौन्दर्यपानस्य, पेयपानस्य युगपदेव कारणम् ।

**लवंगी :** भवतु, चिराल्लेखनीसमासक्तो भवान् । मन्ये, लेखनी तु मम सपत्नी संवृत्ता । किं लिख्यते ? किं च लिखितम् ?

**जगन्नाथः :** लवंगि, शोभनः प्रश्नः कृतः । इमास्तिष्ठन्ति मामकीना गंगालहरीप्रभृतिपञ्चलहर्यः । इदं जगदाभरणम् । लवंगि तव दर्शनात्पूर्वमेव प्रणीता एते ग्रन्थाः । शाहजहानराज भवने स्थित्वा अयमासफविलासो विरचितः । कैश्चि-द्दिवसैश्च त्वामदिदृश्य भामिनीविलासस्य शृङ्गार-विलासं लिखामि । कैश्चिच्चित्पद्यैस्तु त्वं परिचिता एवासि ।

**लवंगी :** सत्यं परिचितास्मि । न केवलमहमेव, मम सखी सम्राज्ञी चापि कैश्चित्पद्यै परिचिते आस्ताम् ।

जगन्नाथः : सत्यं भणसि ?

लवंगी : एकं पद्यं ते उभे अपि चारु स्मरतः यद् भवतैकदा मां प्रति श्रावितम्, मया च सखीं प्रति, सख्या च सम्राज्ञीं प्रति। सम्राज्ञा नैकवारं तत् श्रावयितुमहमाज्ञप्ता।

जगन्नाथः : किं तत् ?

लवंगी : नितरां परुषां सरोजमाला
न विचाराणि विचारपेशलानि।
यदि कोमलता तवाङ्गकाना-
मथ का नाम कथापि पल्लवानाम्।

(पण्डितराजः सस्पृहं शृणोति)

पण्डितराजः : अन्यान्यपि पद्यानि त्वद्विषये नित्यं रच्यन्ते।

लवंगी : किं किं लिखितम् ?

जगन्नाथः : श्रोतुकामासि ?

लवंगी : नूनम्।

जगन्नाथः : सायं श्रावयिष्यामि।

लवंगी : अधुनैव श्रोतुमिच्छामि।

जगन्नाथः : सर्वं त्वद्विषये एव लिखितम्। अनन्तरं श्रावयिष्यामि।

लवंगी : नैव, अधुनैव श्रावयतु।

जगन्नाथः : भवतु, यदि दृढस्तवाग्रहस्तर्हि शृणु।

दरानमत्कन्धरबन्धमीष-
न्निमीलितस्निग्धविलोचनाब्जम्।
अनल्पनिःश्वासभरालसाङ्गं
स्मरामि सङ्गं चिरमङ्गनायाः॥

लवंगी : अलमलमनेन कीर्तनेन ? अयं कतमो ग्रन्थो लिख्यते ?

**जगन्नाथः** : अयं, लवंगि, रसगंगाधरः। अद्यत्वे अस्यापि निर्माणे लग्नोऽस्मि।

**लवंगी** : अस्मिन् किं लिख्यते?

**जगन्नाथः** : लवंगि, अयं मे ग्रन्थः काव्यशास्त्रीयः। ये खलु साहित्यं केवलं ललनाखेलनमेव मन्यन्ते तेषां कृते एतदुत्तरम्। अस्मिन् न्यायरीत्या काव्यसिद्धान्ताः विवेच्यन्ते।

**लवंगी** : शोभनम्। अधुनाहमन्यस्मिन् कक्षे गच्छामि। भवान् यथेच्छं काव्यशास्त्राभ्यासं करोतु। भवन्मार्गे प्रत्यूहरूपेणावस्थातुं न मेऽभिलाषः। यदि काचिदाज्ञा स्यात्तदाकारयितव्यास्मि।

**जगन्नाथः** : गच्छ, विश्रामं कुरु।

**लवंगी** : गृहकार्याणि पूरयितव्यानि तिष्ठन्ति। भोजनादिव्यवस्थापि सम्पादनीया। विश्राम एव गृहस्थस्य नाधिकारोऽपि तु गृहव्यवस्थापि तस्याधिकारः।

**जगन्नाथः** : भवतु, साधय स्वकार्याणि। (लवंगी, गच्छति)
(अध्ययनकक्षात् जगन्नाथस्य ध्वनिः श्रूयते सहैव गृहकार्यव्यापृताया लवंग्या ध्वनिः महानसाच्छ्रूयते)

**जगन्नाथ** : निर्माय नूतनमुदाहरणानुरूपं
काव्यं मयात्र निहितं न परस्य किञ्चित्।
किं सेव्यते सुमनसां मनसापि गन्धः
कस्तूरिकाजननशक्तिभृता मृगेण ?

**लवंगी** : अहो मे सौभाग्यं यस्याः पतिरेवंविधः पण्डितः कविः काव्यमर्मज्ञश्च। यथा काव्यम्, तथैव कण्ठोऽपि।

**जगन्नाथ** : मननतरीतीर्णविद्यार्णवो जगन्नाथपण्डित नरेन्द्रः।
रसगंगाधरनाम्नीं करोति कुतुकेन काव्यमीमांसाम्॥

**लवंगो :** भोजनं सम्पन्नम् । किन्तु कथं पत्युः काव्यशास्त्रसाधनायां विघ्नमुपस्थापयेयम् ?

**जग० :** रसगंगाधरनामा सन्दर्भोऽयं चिरं जयतु ।
किञ्च कुलानि कवीनां निसर्गरम्यञ्चि रञ्जयतु ।

**लवंगो :** अधुना तु भोजनं दातुं गच्छाम्येव । शरीरमाद्यं खलु धर्मसाधनम् ।

(८ पण्डितराजस्य विश्रामकक्षः)

**कपटी पण्डितः :** (द्वारि) पण्डिराज ! पण्डितराज !

**जगन्नाथः :** ननु पश्य लवङ्गि, कोऽस्ति द्वारि !

**लवंगी :** (गत्वा प्रतिनिवृत्य) कश्चित्पण्डितो भवन्तं द्रष्टुकामोऽस्ति ।

**जगन्नाथः :** सादरं प्रवेशयैनम् ।

**लवंगी :** (पण्डिममानीय) एते महानुभावाः समायाताः ।

**जगन्नाथ :** स्वागतं भवतः । आदिशतु किमर्थमागमनम् ?

**पण्डितः :** पण्डितराज, अस्माभिरद्य सायं यमुनातीरे एका विचार-गोष्ठी क्रियते यस्यां काव्यलक्षणमधिकृत्य विचारो विहितः स्यात् । अपि नाम अत्रभवांस्तस्यां समुपस्थातुं सुलभः स्यात् ?

**जगन्नाथः :** ननु आह्लादविषयोऽयं मे । मया सद्य एवेमं विषय-मधिकृत्य किञ्चिद्विचारितमप्यस्ति । 'रमणीयार्थ प्रति-पादकः शब्दः काव्यम्' इति मे काव्यलक्षणम् । विदुषां पुर इदमेव लक्षणं स्थापस्यामि ।

**असूयकपण्डितः :** (द्वारि खटखटा करोति) लक्ष्मीधर ! लक्ष्मीधर ! अरे किं पण्डितराजस्यान्तःपुरे तिष्ठसि ? बहिरायाहि । किमु शुद्धाशुद्धविवेकस्तव नितरां विलुप्तः ?

**जगन्नाथः :** पण्डितवर किमिदम् ? अयं तु स एव कुटिलाचार्यो

द्वारि भवन्तमाकारयति। भवान् किं तस्य सुहृद्वरः ?

**कपटी पण्डितः** : स हि अस्माकमुपदेष्टा। तस्याज्ञापालनेनैव अस्माकं योगक्षेमं सिद्ध्यति।

**असूयकपण्डितः** : (द्वारि) अरे ! लक्ष्मीधर ! कुत्र विलीनः ? कथं नायासि ?

**कपटी पण्डितः** : मया चल्यते। भवान् यथाकालं गोष्ठ्यामायातु। (बहिरागत्य) कुटिलाचार्य ! मया भवत्सन्दिष्टं पण्डितराजाय निवेदितम्। स यथाकालं यथास्थानं विचारगोष्ठ्यां समुपस्थास्यति।

**असूयकः** : त्वया दूरत एव कथं न सूचितः पण्डितराजः ? किमु तत्र जलमपि गृहीत्वागतोऽसि ?

**कपटी पण्डितः** : जलादिग्रहणस्य भवता अवकाश एव कदा दत्तः ? अनुपदमेव माम् आकारयितुं प्रवृत्तः।

**असूयक** : अलमधुनाधरोत्तरेण। इदानीं पश्य मे योगमैश्वरम् ! पश्यामि, कैर्विद्वद्भिस्साकं काव्यलक्षणं विमृशति पण्डितराजः ? (कुटिलं हसति)

### (६ यमुनातीरः)

**पण्डितराजः** : (स्वगतं) अत्र तु कोऽपि नास्ति ? इदमेव स्थानं विचारगोष्ठ्यर्थं निर्दिष्टमासीत्तेन पण्डितेन ! (एकं पुरुषं विलोक्य) अयमेको जनो दृश्यते। अमुमेव पृच्छामि। (प्रकाशं) किं भोः भद्रपुरुष। किमु अद्य अत्र काचिद् विचारगोष्ठी संयोज्यते ?

**पुरुषः** : नाहं जानामि।

**पण्डितराजः** : (इतस्ततः परिक्रम्य) किं करोमि? नखानां पाण्डित्यं प्रकटयतु कस्मिन् मृगपतिः ?

**असूयकः** : (आगच्छन्) पण्डितराज ! किमन्विष्यतेऽत्र यमुनातीरे ? किमु विचारगोष्ठ्यामागतोऽसि काव्यलक्षणविमर्शार्थम् !

इदानीं मत्कृपया त्वयतदर्थं कष्टं नैव सोढव्यं भविष्यति ! गच्छ ! गृहे गत्वा लवङ्ग्या साकं काव्यलक्षणं विचारय। कोऽपि विद्वान् तव च्छायामपि स्प्रष्टुं नानुमतो भविष्यति। (सव्यङ्ग्यं) काव्यलक्षणं विचारयितुं यमुनातीरे समायातो वराकः। (इति गच्छति)

जगन्नाथः : हुं, इयं ते अकारणाविष्कृनवैरदारुणस्य लीला ?

रे खल तव खलु चरितं
विदुषां मध्ये विविचय वक्ष्यामि ।
अथवालं पापात्मन्
कृतया कथयापि ते हतया ॥

(१० पण्डितराजस्य विश्रामगृहम्। रुग्णा लवंगी पण्डितराजश्च)

जगन्नाथः : लवंगी, कीदृशी अवस्था ?

लवंगी : नाथ, दाहज्वरो महान्।

जगन्नाथः : औषधं गृहीतम् ?

लवंगी : गृहतीम्। 'चित्रमीमांसाखण्डनं' सम्पूर्णम् ?

जगन्नाथः : सम्पूर्णम्।

लवंगी : महान् खेदो यदहं भवतां शास्त्रसाधनायां सहयोगं न विदधामि। किं कुर्याम् ? रोगग्रस्तास्मि। ननु भोजनादेर्व्यवस्था तु रुचिरा भवताम् ?

जगन्नाथः : सर्वमपि व्यवस्थितं लवंगि, यदि त्वं स्वस्थतां भजसि ?

लवंगी : ह्यः पंडितानां समूहो द्वारे समागत्य किं कथयति स्म ?

जगन्नाथः : न किमपि, एवमेव प्रलपति स्म।

लवंगी : किं गोपनेन ? मया श्रुतं सर्वमपि। मत्कृते भवानेवंविधं

तिरस्कारं सहते—इति ज्ञात्वा दुःखदावानलेन दह्यते मे हृदयम्। अहं तु परमेशं प्रार्थये यन्मां सः शीघ्रमेव संसारादुत्थापयेत्। मयि उपरतायां तु भवान् समाजे प्रतिष्ठां लप्स्यते।

**जगन्नाथः** : कमलिनि, अनभिज्ञैः बकैरवहेलिता सती कथं चेतो मलिनीकरोषि? एतेषां कूपमण्डूकानां क्षुद्रविचारैर्यदि विमनायमाना भवसि तर्हि खेदः। नन्वहं पण्डितराजस्तव सहजीवी। स्वस्था भव। औषधं गृहाण।

**सखी** : सखि, इदमौषधम्! (औषधं ददाति)

**लवंगी** : औषधं तु गृह्णामि। किन्तु वचनं मे दीयताम्।

**जगन्नाथः** : कीदृशं वचनम्?

**लवंगी** : मयि उपरतायां स्वजातीयया कयाचित् साकं भवान् विवाहं करिष्यतीति।

**जगन्नाथ** : अयि प्रमत्ते! किं प्रलपसि? नैवं भवितुं शक्यते।

**लवंगी** : अन्यदपि कामये।

**जगन्नाथः** : किम् तत्?

**लवंगी** : मय्युपरतायां मम स्मृत्या न खिद्यसे इति।

**जगन्नाथः** : अये, किमेवमसम्बद्धं प्रलपसि? किमप्यन्यद्विचारय।

**लवंगी** : शाहजहानसम्राजः पार्श्वे गमनस्यानुमतिर्लब्धा भवता न वा?

**जगन्नाथः** : किं भणामि लवंगि, औरंगजेबेन यदा प्रभृति सम्राट् बन्दीकृतस्तदाप्रभृत्येव सम्राजा साकं संवादो नाभूत्। आश्रयदाता बन्दी, आश्रयभूता च त्वं रुग्णा! कीदृशी विडम्बना?

**लवंगी** : श्रूयते सम्राडपि रुग्णः?

**जगन्नाथः** : सर्वेऽपि मम परिचिताः खिन्ना रुग्णा वा। एकोऽहमेव मन्दभाग्योऽस्मि यो रुग्णो नास्मि शरीरेण, किन्तु लवंगि, मनसाहमपि रुग्णः। कदाचित्तु अहमेकान्ते रोदिमि इमां दुरवस्थां निरीक्ष्य। अधुना कालः परिवर्तितः !

**लवंगी** : सर्वमक्षिणी निमील्य सोढव्यम्।

**प्रशंसकपण्डितः** : (प्रविश्य) वज्रपातः पण्डितराज ! वज्रपातः ! सम्राट् शाहजहानोः मृतः। यादृशी उदारता तेन प्रदर्शिता अधुना सा असम्भवा। अन्तिमदर्शनाय बहवो जनाः गच्छन्ति।

**जगन्नाथः** : हा कष्टम् ! मदीयः आश्रयदाता, मदीयं मित्रं, मदीयो हितैषी शाहजहामः दिवंगतः ? मृत्यो ! त्वं कमपि न क्षमसे ? लवंगि, त्वं विश्रामं कुरु। अहं दिवंगतस्य सम्राजोऽन्तिमं दर्शनं विधाय आयामि।

**लवंगी** : ननु अहमपि चलामि।

**जगन्नाथः** : मुग्धे त्वं दुर्बला, रुग्णा च। अत्रैव तिष्ठ।

**लवंगी** : नैवम्। सम्राट् मयि अत्यन्तं वात्सल्यं निदधाति स्म। अहं तस्यान्तिमं दर्शनं कर्तुम् अभिलषामि।

**जगन्नाथः** : यथा त्वमभिलषसि। एहि, चलावः।

**सखी** : अहमपि सहैव चलामि। रुग्णाया भवत्याः साहाय्यमाचरिष्यामि।

**लवंगी** : चलतु। (सर्वे गमनं रूपयन्ति)

## (११ मार्गे)

**जगन्नाथः** : अपारो जनसमूहः। औरंगजेबेन अतीव उदारता प्रदर्शिता यत् शाहजहानस्यान्तिमदर्शनकारकाः न बन्दीकृताः।

**लवंगी :** शनैर्वदन्तु। कश्चित् गुप्तचरः शृणुयात्। व्यर्थमेव कष्टं स्यात्। अयं पुरतः स एव पण्डितः समूहेन सहितः समायाति (इति शंकिता जायते। सपण्डितसमूहोऽसूयको मिलति)।

**असूयकपण्डितः :** भणतु पण्डितराजः ! कीदृशं स्वास्थ्यं श्रीमतः ? कुत्र गच्छति भवान् ? ननु अद्य तु लवंगी अपि सहैव। सह नाववतु सह नौ भुनक्तु ! पण्डितानां राजन्। शोभतेतराम् अनया साकम् भवान्। धन्योऽसि।

**जगन्नाथः :** अरे शशकाः, कथं मृगेन्द्रस्याग्रे कूर्दनमुत्फालनं कुरुथ ? मानवतामङ्गीकृत्य किञ्चित् ब्रूत।

**पण्डितः :** मृगेन्द्रस्याग्रे मानवता ? मृगेन्द्रस्तु नरभक्षी। अत एव तस्याखेटः क्रियते नरैः सकौशलम्। पण्डितराज ! अधुना तु भवतामाश्रयदाता पण्डितराजपदवीदाता च शाहजहानोऽपि दिवं गतः। अधुना कुत्र गमिष्यन्ति अत्रभवन्तः ?

**जगन्नाथः :** (व्यंग्येन) भवच्चरणशरणं ग्रहीष्यामि, असूयाशिक्षां च ग्रहीष्यामि ! पण्डिताः, विद्वान् सर्वत्र पूज्यते। ननु दुर्भाग्यं मे यत् शाहजहानः मृतः, किन्तु नाहं निराश्रितः। उदयपुराधीश्वरः प्राणनारायणो बहुधा मां प्रार्थयते स्वसभायामुपस्थातुम्।

**पण्डितः :** (सव्यंग्यम्) अहह ! ननु पण्डितनरेन्द्र ! तस्य क्षत्रियस्य सभायां राजकविरूपेण भवान् स्थास्यति; अनया लवंग्या सह। लवंगी तु तत्र व्याधिरस्ति व्याधिः। अधुना तु पण्डितराज ! मालां गृहाण, गंगातटे च स्वगंगालहरीं पठ।

**लवंगी :** (मूर्च्छिता) नाथ मया साकं सर्वत्रैव भवान् अवमानं लभते। केयं मम मन्दभाग्यता ?

पण्डितः : ननु अभिनयेऽपि कुशला लवंगी ?

जगन्नाथः : अरे मानवरूपधारिणो दानवाः। दूरीभवन्तु अन्यथा मत्तो दुष्टः कोऽपि न स्यात्।

पण्डितः : त्वत्तः दुष्टोऽस्त्येव कः, यो हि यवनीपाशबद्धः सञ्जातः।

जगन्नाथः : अलं बहुजल्पितेन। अयमहं युष्माकं चिकित्सां करोमि पशुबलेन। (दण्डं गृहीत्वा) इदानीं कुत्र धावथ ? ('पण्डितराज ! पूर्वं तु लवंग्याश्चिकित्सां कुरु' इति ध्वनिं कुर्वन्तः पण्डिताः पलायिताः)

लवंगी : (नेत्रे उन्मील्य) नाथ !

जगन्नाथः : लवंगि, एतेषां प्रलापे उपेक्षाबुद्धिं कुरु। अकारणाविष्कृतवैरदारुणा एते।

लवंगी : नाथ कष्टं मे। पण्डितानां व्यङ्ग्यवचांसि श्रोतुमसमर्था इवास्मि।

(नेपथ्ये-लूनं मत्तमतंगजैः कियदपि च्छिन्नं तुषारार्दितैः)

लवंगी : नाथ ! मत्कृते भवता बहु कष्टं सोढम् !

(नेपथ्ये-शिष्टं ग्रीष्मजभानुतीक्ष्णकिरणैः भस्मीकृतं काननम्)

लवंगी : नाथ ! सम्राडपि गतः !

(नेपथ्ये-एषा कोणगता मुहुः परिमलैरामोदयन्ती दिशः)

लवंगी : नाथ क्षन्तव्याऽस्मि, सुखी स्याः।

(नेपथ्ये-हा कष्टं ललिता लवंगलतिका दावाग्निना दह्यते)

लवंगी : ह्री (हिक्का। मरणम्)

जगन्नाथः : लवंगि ! लवंगि ! प्रतिवचनं देहि। (रोदनम्) लवंगि,

अशरणं मां हित्वा कुत्र गताऽसि ? कथं न गिरमंगीकुरुषे ? (रोदनम्) अये क्षुद्रविचाराः ! युष्माभिर्मम लवंगी खादिता । विधे ! एकतो मम जीवनकाननस्य शान्तिः शाहजहानमृत्युना भग्ना, अपरतः क्षुद्रविचारैः लोकैः मम जीवनसुखं छिन्नम्, अस्मिन्नपि एषा लवंगी मृत्युदावानलेन कवलिता । (रोदिति)

(नेपथ्ये भैरवरागेण सकरुणं श्लोका पठ्यन्ते गायकेन)

निर्वाणमङ्गलपदं त्वरया विशन्त्या
मुक्ता दयावति दयाऽपि किल त्वयासौ ।
यन्मां न भामिनि निभालयसि प्रभात-
नीलारविन्दमदभङ्गिमदैः कटाक्षैः ।।

धृत्वा पदस्खलनभीतिवशात् करं मे
या रूढवत्यसि शिलाशकलं विवाहे ।
सा मां विहाय कथमद्य विलासिनि द्याम्
आरोहसीति हृदयं शतधा प्रयाति ।।

दैवे पराग्वदनशालिनि हन्त जाते
याते च सम्प्रति दिवं प्रति बन्धुरत्ने ।
कस्मै मनः कथयितासि निजामवस्थां
कः शीतलैः शमयिता वचनैस्तवाधिम् ।।

सर्वेऽपि विस्मृतिपथं विषयाः प्रयाताः
विद्यापि खेदकलिता विमुखीबभूव ।
सा केवलं हरिणशावकलोचना मे
नैवापयाति हृदयादधिदेवतेव ।।

## (१२ वाराणसी गङ्गातटः)

**जगन्नाथः** : (स्वगतम्) चिरात् दृष्टा भगवतो भूतभावनस्य नगरी वाराणसी ! इहैव मया कदाचित् शास्त्राण्याकलितानि, इहैव सर्वेऽपि नित्यविधयः संसेविता। निःश्वस्य परमद्य अत्रापि न शान्तिं लभे ! हृदयाधिदेवते लवङ्गि ! ननु पश्यसि स्ववल्लभस्य दशाम् ?

**बटुः** : (प्रविश्य) भगवन् ! प्रणमामि। किमु अहं पण्डितराज-जगन्नाथमहाभागानां दर्शनं करोमि ?

**जगन्नाथः** : पण्डिराजस्तु यदासीत् तदासीत्। अधुना तु अनाथो जगन्नाथ एव। को भवान्।

**बटुः** : अहं पिपठिषुरस्मि। मया भवल्लिखिताः रसगङ्गाधर-मनोरमाकुचमर्दन-शब्दकौस्तुभ चित्रमीमांसाखण्डनादयो ग्रन्थाः श्रुताः। तद्विषये विशेषतो ज्ञानमर्जयितुमिच्छामि। मया श्रुतमासीत् यद्भवन्तः गंगातटमधिवसन्ति।

**जगन्नाथः** : सौम्य ! लप्स्यसे ज्ञानम्। किन्तु किं त्वं जानासि यदहं पण्डितैर्बहिष्कृतोऽस्मि। अपरंच उत्तरीया विद्वांसो दाक्षिणत्यं मामवहेलनया पश्यन्ति। त्वं चोत्तरीयोऽसि त्वमपि विद्याग्रहणात्पूर्वमेवावधारय यदेवम्भूतस्य मम सकाशे स्थितिरुचिता न वा ?

**बटु** : अहं तु ज्ञानार्थी अस्मि। ज्ञानस्य सम्मुखे जातिव्यक्ति-वर्णोत्तरदक्षिणप्रभृतीनि तत्त्वानि न किमपि महत्त्वं धारयन्ति। विवाहादिकं व्यक्तिगतमेव तत्त्वम्। यदि समाजं कश्चित् युगलो न बाधते तर्हि तस्य बहिष्कारो व्यर्थ एव। अहं तु भवदीयजीवनेन नितान्तं प्रभावितो-ऽस्मि।

**जगन्नाथः** : सौम्य। प्रबुद्धोऽसि। त्वादृशं शिष्यं प्राप्याहं नितरां प्रीतोऽस्मि कामये च यत्त्वादृशाः युवकाः अस्यां पृथिव्याम् 'उदारचरितानां तु वसुधैव कुटुम्बकम्' इति भावनां वास्तविकरूपेण प्रसारयन्तु। अहमपि यावज्जीवं क्षुद्र-विचारैः साकं योत्स्ये।

**शिष्यः** : भगवन्! एतदेव भविष्यति। अधुना भवन्मुखेनैव भवन्नि-र्मितगंगालहरीम् अंशतः श्रोतुमिच्छामि।

**जगन्नाथः** : अवश्यमेव श्रोष्यसि। लवंगी अपि गंगालहरी-मौत्सुक्येन शृणोति स्म। हा लवंगि, त्वं क्षुद्रविचारै-र्भक्षिता। किन्तु अहमपि एवमादर्शं पोषयिष्यामि यस्याग्रे जातिवर्णादिसंकुचितभावना न स्थास्यति।

**शिष्य** : भगवन्। गगालहरीपदं श्रावयति स्म भवान्।

**जगन्नाथः** : ओः! चतुरोऽसि। शृणु—

**अपि प्राज्यं राज्यं तृणमिव परित्यज्य सहसा**
**विलोलद्वानीरं तव जननि तीरं श्रितवताम्।**
**सुधातः स्वादीयः सलिलमिदमातृप्ति पिबतां**
**जनानामानन्दः परिहसति निर्वाणपदवीम्॥**

(इति भावविलीनो भवति)

**शिष्यः** : (स्वगत) अहो! निमग्नोऽत्रभवान् गङ्गालहर्याम्! (प्रकाशं) भगवन् अतीव आनन्ददायिनीयं लहरी। धन्यो-ऽस्मि यः श्रीमतां मुखादेवेमां श्रुतवान्। को नाम मानवो भवत्कवितामाधुरीं निपीय आनन्दमग्नो न स्यात्?

**मधु द्राक्षा साक्षादमृतमथ वामाधरसुधा**
**कदाचित् केषाञ्चित् न खलु विदधीरन्नपि मुदम्।**

ध्रुवं ते जीवन्तोऽप्यहह मृतका मन्दमतयो
न ये येषामानन्दं जनयति जगन्नाथभणितिः ॥

**वाचकध्वनिः** : एवंभूत आसीत् पण्डितराजो जगन्नाथः यस्य लोकोत्तरं व्यक्तित्वं पाण्डित्येन, कवित्वेन, विलासेन, ज्ञानेन निर्भीकत्वेन, औदार्येण च मण्डितं सत् सर्वदेव विश्वस्य मानवान् आह्लादयिष्यति ।

ससंगीतं गीयते :

विश्वबन्धुत्वमुद्घोषयत्पावनं
विश्ववन्द्यैश्चरित्रैर्जगत्यावयत् ।
विश्वमेकं कुटुम्बं - समालोकयत्
भूतले भाति मेऽनारतं भारतम् ।
वाजिराजि गजालि च न्यक्कुर्वता
पण्डितेन्द्रेण यस्मिँल्लवङ्गी वृता ।
सुस्तनी मस्तकन्यस्तकुम्भा प्रिया
भूतले भाति तन्मामकं भारतम् ।
बुद्बुदाभा नृपा यत्र यातां लयं
यत्र विद्वान् कविश्चामरो राजते ।
त्यागिनो यत्र नैव म्रियन्ते क्वचिद्
भूतले भाति तन्मामकं भारतम् ।
शोषितो नत्र कश्चिद्भवेत्केनचित्
व्याधिना पीडितो नो भवेत्कश्चन
नाऽत्र कोऽपि व्रजेद् दीनतां हीनतां
मोदतां मे सदा पावनं भारतम् ॥



# 'अभिशापम्'

## (ध्वनिनाटकम्)

प्रणेता :

डा० रमाकान्त शुक्लः

## पात्र-परिचयः

नटी :

सूत्रधारः :

सुरेन्द्रः : देवराजः

वृषपर्वा : दानवराजः

बृहस्पतिः : देवानां पुरोहितः (गुरुः)

शुक्राचार्यः : दानवानां गुरुः

कचः : बृहस्पतेः पुत्रः

देवयानी : शुक्राचार्यस्य पुत्री

मदिरा :

व्योमचारी } : विमानचरिणौ देवौ
वियद्गतिकः }

दूतः : वृषपर्वणो दूतः

द्वारपालः : वृषपर्वणो द्वारपालः

प्रतीहारी : सुरेन्द्रशिविरद्वाररक्षिका

धूम्राक्षः : दानवः

अंगारकः : ,,

पिंगाक्षः : ,,

लोहिताक्षः : ,,

रमाकान्तशुक्लप्रणीतं ध्वनिनाटकम्

# अभिशापम्

'देवान् दैत्यांश्च जीवानयमहमखिलान् मृत्युवक्त्रं नयामी'
त्युच्चैरुद्घोषयन्तं जगदिदमभितो भाययन्तं करालम्।
उन्मत्तं कालकूटं प्रसभमखिलं स्वीयकण्ठे नियच्छन्
कुर्यान्नित्यं शिवं वो भुजगपरिवृतो नीलकण्ठो महेशः ॥

(१)

(नान्द्यन्ते)

सूत्रधारः : आर्ये ! आर्ये ! इत आगम्यताम्।

नटी : आर्य ! इयमस्मि ! भणतु, किमर्थमाहूतास्मि।

सूत्रधारः : नन्वार्ये ! विस्मृतं त्वया यदद्यास्माभिः शुक्लोपाह्वरमाकान्तग्रथितवस्तुना नवेन 'अभिशाप'-नामधेयेन ध्वनिनाटकेनोपस्थातव्यम्।

नटी : कथं विस्मृतं स्यान्मया ? सर्वमपि सज्जम्। किन्त्वार्य, भवता मम प्रश्नस्योत्तरं नैव दत्तमधुनावधि !

सूत्रधारः : कः सः प्रश्नः ?

नटी : कथं प्रतिभावतापि नाटककारेण 'अमंगलसूचकं' नाम अस्य नाटकस्य कृतम् ?

सूत्रधारः : अपि मुग्धे ! 'अभिशाप' इत्यनेन नामधेयेनैव कथं शंकितासि ? अमंगलादपि मंगलस्य व्यञ्जना सम्भवा। ननु स्मरसि पुष्पदन्तस्य वचनम् ?

नटी : किं तत् ?

सूत्रधारः : भगवन्तं भूतभावनं स्तुवन् कविः कथयति—

'श्मशाने ष्वाक्रीडा स्मरहर पिशाचाः सहचरा-
श्चिता भस्मालेपः स्रगपि नृकरोटीपरिकरः।
अमंगल्यं शीलं तव भवतु नामैवमखिलं
तथापि स्मर्तॄणां वरद ! परमं मंगलमसि ॥'

एवमेवास्य नाटकस्य विषये त्वयावधार्यम् । अभिशाप-नामधेयमपीदं जगत्यै वरदानरूपम् ।

नटी : कथमिव ? सविस्तरं भणतु ।

सूत्रधारः : अपि वावदूके ! सर्वमपि अभिधयैव न भणितव्यम् । नाटकान्ते सर्वमपि उद्घाटितं भविष्यति । इदानीं नटान् आदिश नाट्यप्रस्तुत्यर्थम् ।

नटी : आर्यपुत्र, सर्वेऽपि सज्जाः सन्ति । ननु भवानेव आकारयतु तान् ।

सूत्रधारः : भो भो मत्सहयोगिनः ! स्वकर्तव्यपालनाय सज्जीभवत ।

(नेपथ्ये)

(समवेतस्वरेण देवाः—वयं सज्जाः स्मः । असुरान् चूर्ण-विचूर्णान् कर्तुं भवतो देवेन्द्रस्याज्ञां प्रतीक्षामहे ! शस्त्र-सम्पाताय आदेशो दीयताम् ।)

सूत्रधारः : अये ! ममादेशं सुरेन्द्रस्यादेशं मन्वाना एते देवाः युद्धक्षेत्रे मामुत्तरयन्ति । नूनं त्रिलोक्यैश्वर्यप्राप्तिमूलं देवदानवयुद्धमासन्नम् ।

(२)

## (देवकटके)

सुरेन्द्रः : गुरुदेव बृहस्पते ! इमे सर्वेऽपि मामकीनाः सैनिका युद्धार्थं सन्नद्धास्तिष्ठन्ति । आशीर्वादो दीयताम् यद्भवत्कृपया समरजयिनो भवेम ।

बृहस्पतिः : विजयस्व शतक्रतो ! स्वपराक्रमेण शत्रून् जय ।

सुरेन्द्रः : सेनापते ! अपि शस्त्रसम्पाताय सर्वे सज्जाः ?

सेनापतिः : अथ किम् ? अन्वादेशमेव सर्वेऽपि रणांगणे स्वपराक्रमं शस्त्रकौशलं च दर्शयितुकामास्तिष्ठन्ति ।

सुरेन्द्रः : तदा तूर्यनादो विधीयताम् । शंखाः, भेर्यः, पणवानकगोमुखाः झंझाम्लातकढक्काः हन्यन्ताम् । युद्धनाटकस्य मङ्गलध्वनिः क्रियताम् ।

सेनापतिः : यथाज्ञापयति भवान् ।

(तूर्यध्वनिः । भेरीपणवानकगोमुखादिध्वनिः)

(३)

(दानवकटके)

वृषपर्वा : गुरुदेव शुक्राचार्य ! देवै रणदुन्दुभिस्ताडितः ।

शुक्राचार्यः : वृषपर्वन् ! वर्धापनम् । शत्रुकृतं युद्धाह्वानं ननु वीराणां मोदवर्धनम् । असुरेन्द्र ! शत्रुकृताक्रमणस्य समुचितमुत्तरं दातुं स्वयोद्धॄन् आदिश । मनस्विना शत्रोरुपरि स्वयमाक्रमणं न करणीयम्, किन्तु यदि शत्रुस्तस्मिन्नाक्रमणं करोति तदा तेन तस्याक्रमणस्य समुचितमुत्तरमवश्यमेव दातव्यम् । विजयस्व रणे !

वृषपर्वा : सेनापते ! शत्रुमनोऽभिलाषविध्वंसको रणदुन्दुभिध्वनिर्विधीयताम् । अस्माकं सर्वेऽपि रणशौण्डा असुरसैनिका युद्धरसं पातुमनुमन्यन्ताम् !

सेनापतिः : यथाज्ञापयति असुरेन्द्रः ।

(रणदुन्दुभिध्वनिः)

(रणक्षेत्रे । शस्त्रसम्पातध्वनिः । गजचिक्कारध्वनिः । हयह्रेषाध्वनिः । वीराणां कोलाहलः । 'वराका देवाः ! अधुनैव दिवं यास्यथ' इत्यसुरध्वनिः, 'अरे शुक्राचार्य-

शिष्याः ! अधुनैव कथावशेषाः क्रियध्वे' इतिसुरध्वनिः, 'इष्टं स्मर ! इयं तव प्राणान्तवेला' 'छिन्द्धि' 'भिन्द्धि' इतियोद्धृध्वनिः । युद्धकोलाहलः । स्वरविलयः)।

(४)

## (सुरेन्द्रयुद्धशिविरे)

सेनापतिः : विजयताम् सुरेन्द्रः । देवसेनया असुराः पंचत्वं प्रापिताः।

सुरेन्द्रः : पराजिता असुराः ? निष्कण्टका वयम् ? त्रैलोक्य-स्वामिनो वयम् ?

सेनापतिः : अथ किम् ? भवद्द्वेषी वृषपर्वा शोकाम्बुधौ निमज्जति । शुक्राचार्यस्तं सान्त्वयति ।

सुरेन्द्रः : सदृशं खलु देवसैनिकानाम् संवृत्तम् । नन्दन्तु देवाः। वर्धन्ताम् अस्मत्सैनिकाः । सेनापते ! सैनिकानां विजयो-त्सवः समायोज्यताम् ।

सेनापतिः : यथाज्ञापयति देवः ।

(५)

उद्घोषकः : भो भो विजयिनो देवाः ! तत्रभवता देवराजेन शक्रेण भवन्तो विजयलाभेऽभिनन्दिताः, आमन्त्रिताश्च युद्धशिविरे एव समायोज्यमाने विजयोत्सवे समुपस्था-तुम्। तत्राप्सरोभिर्दिव्यं नृत्यं प्रस्तोष्यते ।

सैनिकानां समवेतध्वनिः ('शोभनम् ! शोभनम् !' 'चलतु मित्र ! युद्धश्रमं परिहरामः' आदि ।

(सुरेन्द्रशिविरे नृत्यध्वनिः । नृत्यान्ते)

सुरेन्द्रः : भो भो समवेता विजयिनो देवसैनिकाः । युष्माकं रण कौशलस्य, युष्माकमुत्साहस्य युष्माकं जागरूकतायाश्च-

परिणामोऽयं यदद्य वयमसुरान् पराजित्य विजयश्रिय-
मालिङ्गामः।......

**प्रतीहारी (प्रविश्य) :** जयतु जयतु देवः। असुरशिविराद् वृषपवणः सन्देशमाहृत्य दूतः समायातः।

**सुरेन्द्रः :** असुरशिविराद् दूतः? क्वासौ?

**प्रतीहारी :** अस्मच्छिविरद्वारमध्यास्ते। इदं तेन भवदर्थं पत्रं प्रदत्तम्।

**सुरेन्द्रः :** (पत्रं गृहीत्वा वाचयति) "इतोऽसुरशिविरादसुरेन्द्रो वृषपर्वा सुरेन्द्रं विज्ञापयति यद् वीरा जयपराजयाभ्यामन्तरा युद्धभूमिं न परित्यजन्ति। भवतः सैनिका जयपराजययोर्निश्चयं विनैव रणांगणाद् विनिवृत्ताः। अस्माकमसुरसैनिकास्तान् रणाजिरे प्रतीक्षमाणास्तिष्ठन्ति। एतैरस्माकं भवत्सैनिकानां जयपराजयनिर्णायकं युद्धं स्यादथवा युद्धं विनैव भवता पराजयः स्वीकार्यः, अस्माकं शासनं च मौलिमालाभिर्लालनीयम्। (बृहस्पतिं प्रति) सुरगुरो! कोऽयमसम्वद्धप्रलापः? कथमस्माकं सैनिकैर्हता असुरा अद्यापि जीवन्ति? (सेनापतिं प्रति) सेनापते! किम्वलीकविजयसूचनादानेन विप्रलब्धाः वयम्?

**बृहस्पतिः :** अत्राहं कांचिद् दूरगामिनीं मायां तर्कयामि।

**सेनापतिः :** देव! यद्यसुरा रणांगणमधितिष्ठन्ति तर्हि वयमपि स्वबलं पुनः परीक्षितुमुत्सुकाः स्मः! विजयोत्सवं परित्यज्य इदानीमेव युद्धप्रयाणाय सज्जा वयम्! दूतद्वारेण युद्धसन्देशो वृषपर्वणः सकाशे प्रेषणीयः।

**सुरेन्द्रः :** युक्तम् प्रतिहारि! दूत आहूयताम्!

**प्रतीहारी :** यथाज्ञापयति देवः।

(निर्गता। प्रविश्य)

एष दूतः। भवत्सन्देशं प्रतीक्षते।

सुरेन्द्रः : असुरदूत ! भवता मद्वचनादसुरेन्द्रो वृषपर्वा विज्ञापनीयो यद्देवाः कदापि जयपराजयाभ्यां विना युद्धाजिरान्न पलायन्ते, कान्दिशीका वा भवन्ति। श्व एव भगवति विरोचने समुदिते देवदानवबलपरीक्षणं भविता। श्वो युद्धक्षेत्रे चिरनिद्रातः पूर्वमिदानीं निजान्तिमनिशायामसुरसैनिका विश्राम्यन्तु।

## (६)

## (वृषपर्वणः शिविरे)

द्वारपालः : जयतु जयतु असुरेन्द्रः। असुरदूतः सुराणां युद्धशिविरात्प्रतिनिवृत्तो दानवेन्द्रं दिदृक्षति।

वृषपर्वा : त्वरितं प्रवेशयैनं द्वारपाल !

द्वारपालः : (पुनः प्रविश्य) - जयतु जयतु दानवेन्द्रः। अयमसुरदूतः।

दूतः : जयतु जयतु असुराधिपः। अत्रभवन्तमसुरेश्वरं वृषपर्वणं प्रति विज्ञापयति सुरेन्द्रो यद्देवाः जयपराजयाभ्यां विनां युद्धभूमिं न परित्यजन्ति, अतः प्रातःकाले सुरासुरबलयोः परीक्षणं भविता।

वृषपर्वा : (सव्यंग्यं, साभिमानं) ह ह ह ! प्रातःकाले सुरासुरबलयोः परीक्षणं भविता ! मुग्धोऽसि सुरेन्द्र ! केवलमसुराणामेव बलं परीक्षितं भवेत्, मृतानां देवानां बलपरीक्षणं कथं संभवेत् ? असुराः अमराः सन्ति, गुरुवरशुक्राचार्यस्य कृपया ! (शुक्राचार्यं प्रति) असुरगुरो भगवन् भार्गव ! किमस्मासु भवत्प्रसादमतिशेतुं सुराः प्रभविष्यन्ति ?

शुक्राचार्यः : कदापि न। मच्छिष्या असुराः कदापि मर्तुं नार्हाः।

मद्वशंगता संजीविनी विद्या। तान् सदैव संजीवयिष्यति। पश्यामि सुरगुरोर्बृहस्पतेर्विद्याबलम् श्वो रणांगणे! मच्छिष्यहेतिदलितान् अमरान् कथममरीकरिष्यति स वराक इति दर्शनीयमस्ति! व्यपनयामि तस्य बृहस्पतित्वम्। वृषपर्वन्!

वृषपर्वा : आज्ञापयतु भगवान् काव्यः।

शुक्राचार्यः : श्वो मयापि युद्धक्षेत्रे भाव्यम्। यदि देवा असुरान् घातयन्ति तदाहं तान् संजीविन्या विद्यया पुनरपि उज्जीवयिष्यामि।

वृषपर्वा : अनुगृहीतोऽस्मि भवदाशिषा। श्वो मया साकमेव भवन्तो युद्धक्षेत्रे स्थास्यन्ति।

(७)

(सुरेन्द्रसेनाकटके)

सुरेन्द्रः : सेनापते!

सेनापतिः : आज्ञापयतु देवराजः।

सुरेन्द्रः : समुदेति भगवान् विरोचनः। तूर्यनादः क्रियताम्। देवानां पराक्रमरसमास्वादयन्तु दानवाः। देवानां विजयवैजयन्ती आकाशे अव्याहता उल्लसतु। अपि किं वैमानिका देवाः पुष्पवृष्ट्यर्थमाकाशे यथादेशं तिष्ठन्ति?

सेनापतिः : सुरपते! ते स्वनियोगमशून्यं कुर्वन्ति।

सुरेन्द्रः : भगवन् बृहस्पते! मम सेनायै स्वाशिषम् आशंसतु।

बृहस्पतिः : सर्वथा भद्रं भूयात् पुरन्दरबलस्य।

सुरेन्द्रः : सेनापते! युद्धारम्भाय दुन्दुभिस्ताडितः स्यात्। अद्य जयपराजयाभ्यां विना युद्धस्थलं नैव परित्याज्यम्।

सेनापतिः : यथाज्ञापयति देवः। (सशस्त्रसम्पातं युद्धध्वनिः)

(८)

(आकाशे)

वियद्० : मित्र व्योमचारिन्। अस्माभिर्देवानां विजये पुष्पवृष्टिः करणीया विद्यते। इदं युद्धं प्रारब्धम्। एते देवा स्वायुधैरसुरान् प्रहरन्ति। असुरा अपि बलिष्ठाः सन्ति। देवांस्ते इदानीं धर्षयन्ति !

व्योम० : मित्र वियद्गतिक ! पश्य पश्य ! सुरैरसुरा निपात्यन्ते। वर्षय वर्षय पुष्पाणि ! सुराणां विजयो भवति।

वियद्०: : व्योमचारिन् ! पश्याश्चर्यकम् ! एते असुरा भूमौ पतिताः पुनरप्युत्तिष्ठन्ति। एष शुक्राचार्यो जलमुपस्पृश्य तान्संजीवयति।

व्योम० : अये सत्यम् ! कथमुत्थायोत्थाय एते असुरा देवान् धर्षयन्ति।

वियद्० : हा हन्त ? नासीरसीमनि स्थिता प्रायशो देवा असुरैर्हताः। युद्धक्षेत्रे असुरश्चैकोऽपि निहतो न दृश्यते।

व्योम० : पश्य, अयम् असरो देवेनानेन निपातितः।

वियद्० : अरे रे पश्य, अयन्तु पुनरपि उत्थितः। अयंच शुक्राचार्यो जलमुपस्पृश्य कामपि मायामाचरति।

व्योम० : देवबलं हीयते। शक्रोऽपि बृहस्पतिना साकं चिन्ताचुम्बित इव लक्ष्यते।

वियद्० : इदानीं पुष्पवृष्टेः किं भविष्यति ?

व्योम० : मित्र विमानमवतारय ! अल्पीयांसो हि देवा अवशिष्टाः। गत्वा शक्रं निवेदयावः शुक्राचार्यकृतां मायाचेष्टाम्।

वियद्० : पश्य, देवाः कान्दिशीकाः संवृत्ताः। असुराः सर्वेऽपि यथावस्थिताः साट्टहासं विजयश्रियमनुभवन्ति।
(अट्टाहासध्वनिः)

व्योम० : सत्यमेव भणसि सखे ! एहि, शक्रं प्रति चलावः।

(६)

(सुरेन्द्रसेनाशिविरे)

व्योम० : जयतु जयतु देवः !

सुरेन्द्रः : कथं जयतु अयं मन्दभाग्यः सुरेन्द्रपदवाच्यो जन्तुः ? ह्य एव विजयिनी देवसेना अद्य विनष्टा। न केवलं पराजयोऽपितु प्रणाशोऽपि संवृत्तः। अमरा मृताः, असुराश्च यथावत्तिष्ठन्ति।

व्योम० : देव ! अत्र शुक्राचार्यः कारणं प्रतीयते। वियद्गतिकेन साकं मया विमानस्थेन दृष्टं यदुशनसा जलमुपस्पृश्य मृता असुरा वारंवारमुज्जीविताः। नूनं सः कामपि अमोघां विद्यां जानाति येन मृता अपि दानवाः पुनरुज्जीवन्ति।

वियद्० : सत्यं भणति व्योमचारी, देव ! मयाप्येवमेवावलोकितम्।

सुरेन्द्रः : (निःश्वस्य) हुं ! सुरगुरुं पृच्छामि ! भगवन् वृहस्पते ! मृतानामसुराणां पुनरुज्जीवने किं कारणं स्यात् भवन्मतेन ?

बृहस्पतिः : शतक्रतो ! तं श्रुतु मयाप्यासीद्यदुशनाः मृतसंजीविनीं विद्यां जानाति किन्त्वद्य तु अवलोकितमेव। नूनं शुक्राचार्यसिद्धा मृतसंजिविनी विद्यैव असुराणां पुनरुज्जीवने हेतुः।

सुरेन्द्रः : हा हता स्मः ! इदानीं वयं कदापि विजयमुखं नैव द्रक्ष्यामः । असुरा एव त्रैलोक्यशासका भविष्यन्ति । भीतभीता इव देवा इतस्ततः शरणं मार्गयिष्यन्ति ।

भगवन् बृहस्पते !

बृहस्पतिः : कथनीयं भणतु सुरेन्द्रः ।

सुरेन्द्रः : अपि नाम भवद्भिः सा संजीविनी विद्या उपासिता स्यात् ?

बृहस्पतिः : मघवन् ! अशक्यमेतत् । न हि शुक्राद् ऋते कश्चित्तां विद्यां वेत्ति । अहं शुक्रश्च नित्यमन्योन्यप्रतिस्पर्धिनौ । नाहं तं गुरुरूपेण स्वीकर्तुं पारये । विना च गुरुसेवां विद्या नोपलभ्यते ।

सुरेन्द्रः : दुर्दिनानि समागतानि देवानाम् ! कथं सुराणामस्तित्व-मवशिष्येत ?

व्योम० : देव ! उपाय एको मयोत्प्रेक्ष्यते तद्विद्योपार्जनस्य ।

सुरेन्द्रः : कः स उपाय ? भण व्योमचारिन् !

व्योम० : देव ! भगवतो बृहस्पतेः ज्येष्ठपुत्रः कचः शुक्राचार्यस्य शिष्यतां गृहीत्वा विद्यां साधयितुं क्षमः स्यात् ।

सुरेन्द्रः : भगवन् बृहस्पते ! अस्मिन् विषये भवतः किं मतम् ?

बृहस्पतिः : नाहं तस्य विद्यार्जनमार्गे प्रत्यूहीभवामि । यदि सः शत्रुपुरीमधिष्ठाय मत्प्रतिपक्षादपि विद्यां जिघृक्षति तर्हि न मम कापि हानिः । विद्यार्जनं हि ब्राह्मणानां प्रथमं कर्तव्यम् । किन्त्वस्मिन् विषये कच एव प्रष्टव्यो न त्वहम् । युवा हि पुत्रः स्वविषये निर्णयं कर्तुं प्रभुर्भवति ।

सुरेन्द्रः : तर्हि कचमेव विमृशामः ।

(१०)

(कचावासे)

सुरेन्द्रः : ब्रह्मन् ! अभिवादये !

कचः : (स्वगतं) अये ! सपरिकरः सुरेन्द्रः ? (प्रकाश) स्वागत सुरेन्द्रपरिकराय ! किं भवतः प्रियमुपकरोमि ?

सुरेन्द्रः : कच ! भवत्येवायत्तमस्माकं कल्याणम् । ब्रह्मचारिन् ! उत्तारय विपद्ग्रस्तान् देवान् !

कचः : स्पष्टं भणतु भवान् ! का समस्या ?

सुरेन्द्रः : देवदानवयंयुद्धे देवानां महती हानिः संवृत्ता । दानवाश्च शुक्राचार्यस्य विद्याबलेन मृता अपि पुनर्जीवन्ति । असुरा अजेयाः संवृत्ताः ! भवान् अस्माकं साहाय्यमाचरतु । कच ! देवान् संजीवयतु भवान् !

कचः : कथमहं देवान् संजीवयेयम् ?

सुरेन्द्रः : अमिततेजसि ब्राह्मणे शुक्राचार्ये संजीविनी विद्या निवसति । भवान् विप्रवरं तमुपसेव्य छलेन तां विद्यां गृह्णातु । न तत्सकाशे स्वगोत्रकुलनामादि कीर्तनीयम् ।

कचः : शतक्रतो ! असदृशं खल्विदं ब्राह्मणकुमारस्य । देवानां कल्याणाय शुक्राचार्याद् विद्यां ग्रहीष्यामि किन्तु विनयेन, गुरुशुश्रूषया, परिप्रश्नेन, न तु छलेन । छलगृहीता विद्या न सफला भवति ! अहं नामकुलगोत्रादि संकीर्त्यैव शुक्राचार्यं प्रसादयिष्यामि विद्यां चाहरिष्यामि ।

सरेन्द्रः : कच ! अस्मत्सम्बन्धपरिज्ञाने कदाचिच्छुक्राचार्यो भवते विद्यां न दद्यादिति विचार्य मया स्वगोत्रकुलनामादेर्गोपनं प्रस्तावितमासीत् । अत्र पुनर्विचारयितुं प्रार्थ्यते भवान् ।

कचः : पुनर्विचारस्यावकाश एव नास्ति । विद्यादानं विद्याग्रहणं च सात्त्विकानुष्ठाने स्तः । तत्र छलप्रयोगो विघ्नस्वरूपः । नाहं तत्र राजनीतिं प्रयोक्तुं गच्छामि । कामं भवतु शुक्राचार्यो मत्पितुर्बृहस्पतेः प्रतिपक्षी, दानवानां च गुरुः,

अहं तु विद्यार्जनाय तं शुद्धेनैव चेतसा आराधयिष्यामि।

सुरेन्द्रः : यथा रोचते भवते। वयं तु भवन्तं संजीविनीविद्यासमलंकृतं द्रष्टुकामाः स्मः। भवता वृषपर्वनगरे शुक्राचार्यो द्रष्टव्यः। तेनैव साकं तस्य प्रियसुता देवयानी अपि निवसति। अहं विश्वसिमि, यद् भवान् असुरगुरुं शुक्राचार्यं तत्सुतां देवयानीं च स्वशीलदाक्षिण्यमाधुर्यैराचारेण दमेन च प्रसाद्य संजीविनीं विद्यामवश्यमेव संसाधयिष्यति।

कचः : भवदिच्छा सफला स्यात्। अहं पितुराशिषं गृहीत्वा असुरेन्द्रपुरं प्रति अद्यैव प्रतिष्ठे।

(११)

(वृषपर्वनगरे)

कचः : इदमसुरेन्द्रपुरम्। अहो भव्यता दानवेन्द्रनगरस्य! अयं चाश्रमः शुक्राचार्यस्य। तदुपसर्पामि। इयं कन्या किमु देवयानी एवास्ति? (प्रकाशं) नमस्करोमि कल्याणीम्। अपि नाम शुक्राचार्यपादा आश्रममधितिष्ठन्ति?

देवयानी : स्वागतं भवते। किन्नामधेयं भवन्त जानीयाम्।

कचः : आचार्यपादानां शिष्यतां कामयमानं ब्राह्मणकुमारं मामवगच्छतु अत्रभवती। अपि नाम तेषां दर्शनं सुलभम्?

देवयानी : क्षणं विश्रम्यताम्! अहं भवदागमनं पित्रे निवेदयामि।

(१२)

(शुक्राचार्यकक्षे)

देवयानी : तात! कश्चिद्विप्रबटुः भवन्तं द्रष्टुम् आश्रमद्वारमधितिष्ठति। भवतः शिष्यतामभिलषति।

शुक्राचार्यः : किं नामधेयः? कुतः समायातः? कस्य सुतः?

देवयानी : इति तु सर्वं मया न पृष्टम्। परं सोऽत्यन्तं सौम्याकृति-स्तेजस्वी च वर्तते। नामधेयादिकं प्रष्टव्यं किम्?

शुक्राचार्यः। अधुना किं प्रक्ष्यसि? अहमेव तं सौम्याकृतिं तेजस्विनं च पश्यामि। चल! (पादुकाध्वनिः)

(१३)

(आश्रमद्वारे)

शुक्राचार्यः : (स्वगतं) यथार्थमाह देवयानी। महानुभावोऽयं विप्रकुमारः। (प्रकाशं) कस्त्वं वटो?

कचः : ऋषेरङ्गिरसः पौत्रः, साक्षाद्बृहस्पतेः पुत्रो नाम्ना कचो-ऽहमाचार्यपादान् सादरमभिवादये।

शुक्राचार्यः : बृहस्पतेः पुत्रः? कथमत्रागमनं तव?

कचः : भगवन्! भवच्छिष्यतां कामयमानोऽस्मि।

शुक्राचार्य : सकलविद्यागुरो बृहस्पतेरात्मजः सन्नपि मच्छिष्यतां कथं कामयसे? त्वया तु स्वयमेव सकलविद्यालिंगितेन भाव्यम्।

कचः : भगवन्! मया स्वपितुरनेका वेदवेदांग-साहित्य-संगीता-दिका विद्या गृहीताः सन्ति। किन्तु भवान् ततोऽप्यधिकं सिद्धविद्य इति सर्वंजगच्छ्रुतिगोचरो विषयः। अतो-ऽत्रभवान मां शिष्यत्वेन परिग्रहीतुं सादरमभ्यर्थ्यते।

**ब्रह्मचर्यं चरिष्यामि त्वय्यहं परमं गुरौ।**
**अनुमन्यस्व मां ब्रह्मन् सहस्रं परिवत्सरान्॥**

शुक्राचार्यः : (स्वगतं) बृहस्पतेरयं पुत्रः सत्यवाक् स्पष्टवाक् च प्रतीयते। सहस्रवर्षपर्यन्तं ब्रह्मचर्यं धारयितुं संकल्प-शीलः। विद्यादानयोग्यं पात्रम्। भवतु मत्परिपंथिनः पुत्रः। यदि सत्पात्रमस्ति तदा मच्छिष्यतामर्हति।

(प्रकाशम्) कच ! ते वचः प्रतिगृह्णामि । देवयानि !

देवयानी : का आज्ञा तात ?

शुक्राचार्य : अयं कचकुमारोऽस्मदाश्रमे स्थित्वा ब्रह्मचर्यं चरिष्यति । अस्यातिथ्यं क्रियताम् । (स्वगतं) पश्यामि कथं सहस्रवर्ष-पर्यन्तं ब्रह्मचर्यं चरति । विद्या गुरुविनयवृत्त्यातिविषमा भवति । किन्तु यद्ययं ब्रह्मचर्यव्रतं सम्यक् परिपालयति तदास्य यौवनं मत्प्रभावात् स्थास्नु भविष्यति । न तत्र सहस्रवर्षानन्तरमपि जरागमनं भविष्यति (प्रकाशं) कच ! त्वया नित्यमेव आश्रमगावश्चारणीयाः । नित्यमेव अग्निहोत्रार्थं समिधः समाहरणीयाः । भगवान् भूतभावनः समर्चनीयः । मदनुपस्थितौ मत्सुताया देवयान्या आज्ञा पालनीया । सहस्रवर्षानन्तरं तव पात्रतां परीक्ष्य तुभ्यं विद्यां दास्यामि ।

कचः : अनुगृहीतोऽस्मि । यथादेशं ब्रह्मचर्यं चरिष्यामि ।

(१४)

(शुक्राचार्याश्रमः । प्रातकाले चटकानां कलरवः)

कचः : गुरुसुते ! सुप्रभातम् । इमा आचार्यवरस्य कृते अग्निहोत्र-समिधः सन्ति । एतानि बिल्वपत्राणि । एतानि च पूजार्थं कुसुमानि ।

देवयानी : शोभनम्

कचः : इदानीमहमपि महेशानं समर्चयामि । पुनश्च गाश्चारयितुं वनं यास्यामि । (स्वकुटीरे गच्छति, तत्र च शम्भुं पूजयति)

ॐ नमः शंभवाय च मयोभवाय च,
नमः शंकराय च मयस्कराय च,
नमः शिवाय च शिवतराय च ।

ॐ त्र्यम्बकं यजामहे
सुगन्धिं पुष्टिवर्धनम् ।
उर्वारुकमिव बन्धनान्मृत्यो
र्मुक्षीय मामृतात् ।।

देवयानी : अहो जलधरस्तनितगंभीरघोषः कचस्य :
(कचः भगवन्तं सस्वरं स्तौति)

शंकरं शंप्रदं सज्जनानन्ददं
भावगम्यं परेशं महेशं भजे ।
नीलकण्ठं महाकालकालं विभुं
निर्विकल्पं निरीहं कृपालुं भजे ।
कम्बुकुन्देन्दुकर्पूरगौरं शिवं
पापनाशं वरेण्यं हरं सन्दधे ।
रुद्रमोंकारमूलं भवं कामहं
विश्वनाथं विभूत्यङ्गभूषं भजे ।।

देवयानी : अहो एकाग्रध्यानपरता कचस्य! अहो स्वरलहरी कचस्य !

(१५)

(शुक्राचार्याश्रमे)

कचः : देवयानि ! अहं गाश्चारयितुं वनं गच्छामि ।
(गोप्रणोवनध्वनिं करोति । गवां वत्सानां च ध्वनिः । घण्टिकाध्वनिः)

देवयानी : गच्छ ! कदा प्रत्यागमिष्यसि ?

कचः : सूर्यास्तवेलातः पूर्वमेवागमिष्यामि ।
(गोरम्भाध्वनिः, गोप्रयाणध्वनिः)

## (१६)

## (उपाश्रमं प्रत्यावर्तनमार्गे)

कचः : हो हो ! कपिले ! इतः इतः । श्यामे ! इतः इतः । हो वत्स ! इतः इतः ।

(गोरम्भाध्वनिः घण्टिकाध्वनिः)

देवयानी : प्रतिनिवृत्तोऽसि कच ! गोचारणात् ?

कचः : आम् ! इमा आचार्यपादानां सायंतनस्य यज्ञस्य कृते समिधः । एतानि च फलानि भवत्यै समुपाहृतानि ।

देवयानी : अये मत्कृते कथं कष्टमनुभवसि ?

कचः : न हि कष्टमनुभवामि । गुरुसुतायाः प्रसादने आनन्दमनुभवामि !

देवयानी : कच ! त्वया या शम्भोः स्तुतिः कृता आसीत् तामहमपि शिक्षितुमिच्छामि । अपि शिक्षयिष्यसि माम् ?

कचः : अवश्यमेव ! ननु सौभाग्यं मे ।

देवयानी : तर्हि तातपादानां सायंतनयज्ञसमाप्तावेव शिक्षय । अहं स्तुतिमिमामुपवीणयिष्यामि ।

कचः : अपि भवत्याः सकाशे वीणा वर्तते ?

देवयानी : आम्, वर्तते । अहं जानाम्यपि वीणां वादयितुम् किंचित्किंचित् ।

कचः : शोभनम् । अहमपि किंचित् किंचित् वीणावादनं जानामि ।

देवयानी : तर्हि अद्य शम्भुस्तुतिं शिक्षयिष्यसि ?

कचः : अवश्यमेव । शुभः कल्पः ।

## (१७)

## (शुक्राश्रमे)

शुक्राचार्यः : वत्से देवयानि ! सायन्तनस्य अग्निहोत्रस्य व्यवस्था संजाता ?

देवयानी : संजाता तात ! इमाः समिधः । इदमाज्यम् । इमानि पात्राणि । अयमाहवनीयोऽग्निः । इदम् हव्यम् । सर्वमपि सन्नद्धं तिष्ठति । कचेन मया च सर्वा व्यवस्था कृता ।

शुक्राचार्यः : शोभनम् ! युवामपि अग्निहोत्रवेलायां मामुपतिष्ठतम् ।

देवयानी : युक्तम् । कृतगोचारणोऽयं कचोऽपि स्नात्वा आयात्येव ।

कचः : (प्रविश्य) प्रणमामि आचार्यपादान् ।

शुक्राचार्यः : तपोनिष्ठो भव । एहि, अग्निहोत्रं कुर्मः ।

(सर्वे मन्त्रं पठन्ति)

"उपत्वाग्ने दिवे दिवे दोषावस्तर्धिया वयम् । नमो भरन्त एमसि ।"

ॐ अग्नये स्वाहा !

देवयानी : तात ! कचकृता परेशस्तुतिरतीव हृद्या । न श्रोष्यसि किमु ?

शुक्राचार्यः : कथं न श्रोष्यामि ?

देवयानी : अहं वीणावादनं करिष्यामि ।

शुक्राचार्यः : अवश्यं कुरु ।

देवयानी : अहमपि तां स्तुतिं कण्ठस्थां करिष्यामि ।

शुक्राचार्यः : अवश्यं कुरु ।

देवयानी : कच ! आरभ्यताम् शंभुस्तुतिः ।

(कचः 'शङ्करं···'इत्यादि शम्भुस्तुतिं गायति । देवयानी वीणां वादयति)

शुक्राचार्यः : साधु गीतम् ! साधु वादितम् !

देवयानी : कच ! अधुनाहं गायामि स्तुतिमिमाम् । त्वं वीणां वादय ।

कचः : यथाज्ञापयति कल्याणी ।

(देवयानी गायति । कचो वीणां वादयति)

शुक्राचार्यः : साधु गीतम् ! साधु वादितम् ! इदानीं गोशालायां दीपज्वालनं कुरुतम् । अहमपि ध्यानस्थितो भवामि ।

उभौ : यथाज्ञापयति भवान् ।

(अन्तरालसूचकं संगीतम्)

## (१८)

## (प्रातःकाले शुक्राश्रमे)

देवयानी : किं चलितोऽसि कच ! गाश्चारयितुम् ?

कचः : आम् देवयानि ! किं न पश्यत्यत्रभवती गवां समूहम् ? परमद्यैव कथं पृच्छति भवती ? अहं तु नित्यमेव गाश्चारयितुं वनं गच्छामि । अद्यावधि तु भवत्या कदापि न। पृष्टोऽहम् ?

देवयानी : न जानासि ? अद्य ब्रह्मचर्यव्रतं चरतस्ते पञ्चशतवर्षाणि व्यतीतानि । न जाने किमिव हि मम मनोऽद्य त्वां वनं प्रेषयितुं नेच्छति । इच्छामि यदत्रैवाश्रमे स्थित्वा त्वं गीतेन वीणावादनेन च भगवन्तं शम्भुं प्रसादयेः ।

कचः : कल्याणि ! सायंकालेऽवश्यमेव यथाभवदादिष्टं समाचरिष्यामि । इदानीं गावो वनं प्रति चलिताः सन्ति तासां रोधो नोचितः स्यात् ! तर्हि अनुमन्यस्व मां गाश्चारयितुम् ।

देवयानी : (समानमिव) यथा ते रोचते तथा कुरु । किन्त्वद्य शीघ्रमेव प्रतिनिवर्तस्व ।

कचः : यथाज्ञापयति कल्याणी ।

## (१९)

## (सांयकाले शुक्राश्रमे)

देवयानी : तात ! तात ! अनिष्टं मे प्रतिभासते ।

शुक्राचार्यः : कोनाम तवानिष्टं कर्तुं क्षमते ? ब्रूहि ! किमेवं कातरासि ?

देवयानी : तात ! भवता अग्निहोत्रमाहुतम्, सूर्यश्चास्तं गतः, गावश्चागोपा एवाश्रमं समागताः, किन्तु कचो नैव दृश्यते ।

शुक्राचार्यः : किं ब्रवीषि देवयानि ?

देवयानी : सत्यं ब्रवीमि तात ! अवश्यमेव कचो व्यापादितो वा मृतो वा स्यात् । तात ! कचं विनाहं न जीविष्यामि ! (रोदिति)

शुक्राचार्यः : वत्से ! असुरगुरोः भार्गवस्य शुक्राचार्यस्य सुता भवन्त्यपि रोदिषि ? यदि कचो मृतोऽस्ति तर्हि अयमहं द्रागेव संजीविनीविद्यां प्रयुज्य तं पुनः संजीवयामि। कृतान्तोदरादपि तं निःसार्य त्वत्सम्मुखं क्षणेनैवोपस्थापयामि।

देवयानी : तात ! प्रयुज्यताम् संजीविनी, मज्जीवनाय । अन्यथाहमपि जीवितं त्यक्ष्यामि ।

शुक्राचार्यः : वत्से समाश्वसिहि ! इयं त्वं कचं स्वसम्मुखे पश्यसि । (शुक्राचार्यः संजीविनी प्रयुङ्क्ते) 'वत्स कच ब्रह्मचारिन् ! अत्रागम्यताम्' ।
(कुक्कुराणां जम्बुकानां च उदरशूलजन्यध्वनिः)

कचः : अयमहं प्रणमामि कचो भगवन्तम् असुरगुरुम् !

देवयानी : (हृष्ट्वा) कच ! कुत्रासीः त्वमेतावत्कालपर्यन्तम् ? कस्माच्चिरायितोऽसि ? अधुना कुतः प्रादुर्भूतोऽसि ?

कचः : भार्गवि ! भवत्यानुमतोऽहं प्रातः गाः नीत्वा वनमगच्छम् । भवदादेशनुसारं वनादद्याहं सायंकालात्पूर्वमेव आश्रमं प्रति प्रस्थितः । समिधः, कुशाः, काष्ठभारं च

गृहीत्वाहं श्रमभारार्तः सन् मार्गे वटवृक्षं समशिश्रियम्। गावश्चापि सर्वा वृक्षच्छायां समाश्रिताः। तदानीमेव केचिदसुरास्तत्र समागताः—

(फ्लेशबैकपद्धत्या)

पिंगाक्षः : कोऽसि रे वटच्छायावलम्वी त्वम्?

कचः : अहं बृहस्पतिसुतः कचोऽस्मि।

लोहिताक्ष : सुराणामस्मद्द्वेषिनां गुरोर्बृहस्पतेः पुत्रः? सर्पसुतोऽसि! (पिंगाक्षं प्रति) पिंगाक्ष! समाप्यैनं खड्गेन! न जाने कदा किमस्माकमनिष्टमाचरेत्?

कचः : मा मा मां मारयतु।

लोहिताक्ष : शत्रुं यदि न हन्मस्तदा किं मित्रं हन्मः? पिंगाक्ष! मां दयां कुरु! पातय खड्गमस्य स्कन्धे।

(पिंगाक्षः खड्गं चालयति! कचस्य ग्रीवा कृत्ता)

पिंगाक्षः : लोहिताक्ष! पश्य सर्पकुमारस्य खण्डद्वयं संवृत्तम्।

(अट्टहासं करोति)

लोहिताक्षः : पिंगाक्ष! खण्डद्वयेनैव कार्यं न सेत्स्यति। अस्य मांसं खण्डशः कृत्वा पेषीकृत्वा च शालावृकेभ्यो जम्बुकेभ्यश्च समर्पणीयम्। एते समायान्ति आघ्रात-मांसाः कुक्कुराः शृगालाश्च।

(कुक्कुराणां शृगालानां च ध्वनिः)

पिंगाक्षः : (मांसखण्डान् पेषीकुर्वन्) हा हा हा! यथेच्छं भुज्यताम् सुरगुरुसुतस्य मिष्टं मांसं भोः शालावृकाः!

(कुक्कुरध्वनिः)

लोहिताक्षः : पिंगाक्ष! इदानीं कृतकार्या वयम्! प्रस्थानं कुर्मः। बृहस्पतिसुतः कचः, सोऽपि वृषपर्वणो नगरस्य समीपस्थ एव वने! असुरा यथा श्वसन्त्येव नात्र। हुं—(प्रस्थिताः)

(फ्लैशसमाप्तिः)

कचः : किञ्चित्कालानन्तरमेव भार्गवेण महात्मनाहमाहूतः। तदैव कुकुराणां शृगालानां चोदरेभ्यो निःसृत्याहमत्र संजीवितः सन् समायातः।

देवयानी : जीवामि ! तात ! अद्यप्रभृति कच आश्रमे एव स्थित्वा ब्रह्मचर्यव्रतं पालयतु। गोचारणाय अपरः शिष्यो नियुज्यताम्।

कचः : अलं भयेन ! प्रतिदिनं तु एवं न भवति। अद्यावधि पञ्चशतवर्षेषु कदापि नैवं संवृत्तम्।

देवयानी : तूष्णीं भव ! अद्य प्रातरपि मम निषेधमुल्लंघ्य वनं प्रस्थितः आसीः। तस्य फलं भुक्तम् त्वया मया च। इदानीं त्वामाश्रमाद् वहिर्न प्रेषयिष्यामि। (शुक्राचार्यं प्रति) तात ! आज्ञापयैनमत्रैव स्थित्वा ब्रह्मचर्यं पालयितुम्।

शुक्राचार्यः : उचितं भणति देवयानी। कच ! त्वया आश्रमे स्थित्वैव गोसेवा कार्या। अद्यप्रभृति त्वं गोचारणाय वने न गमिष्यसि। देवयान्या साकं स्वाध्यायस्त्वया कर्त्तव्यः। आश्रमपादपानां सेचनं पोषणं च कर्त्तव्यम्। यदा देवयानी त्वां वहिराश्रमं प्रेषयेत्तदैव त्वमितो बहिर्गच्छेः। अपि गृहीतोऽर्थस्त्वया ?

कचः : यथादिशति भार्गवः। आज्ञा गुरूणां परिपालनीया।

शुक्राचार्यः : देवयानि ! कचस्य कृते मंगलाचारं कुर्याः !

देवयानी : मया प्रथममेव एतत्कृते विचारितमासीत्। अद्यास्य पंचशतवर्षाणि व्ययीतानि तपश्चरतः।

(मांगलिकध्वनिः)

(२०)

(देवयानी-कुटीरे)

(प्रातःकालीनपक्षिध्वनिः)

कचः : देवयानि ! मया स्वाध्यायः कृतः। गावोऽपि सेविताः। आश्रमपादपा अपि सिक्ताः। अन्यत्किमनुष्ठेयम् ?

देवयानी : कच ! अविदूरस्थ एव सरसि कमलानि विकसितानि सन्ति। कतिपयानि कमलानि आनेतुमर्हसि। अतिदूरं मा गाः। अहमद्य कमलवलिना शंभुमर्चयितुमिच्छामि।

कचः : पूजायै कश्चिद्विशिष्टावसरोऽस्ति ?

देवयानी : अद्य मम जन्मदिवसोऽस्ति।

कचः : वर्धापनम। अयमहमनुपदमेवायामि कमलानि गृहीत्वा। अहमपि भगवतो भूतभावनस्य विशेषस्तुतिं करिष्यामि।

देवयानी : शोभनम् ! न नु शीघ्रमेव आगच्छेः।

(२१)

देवयानी : (स्वगतं) प्रातःकाले कचः कमलानि आहर्तुं समीपस्थं तडागं गत आसीत् किन्तु इदानीं यावन्न प्रतिनिवृत्तः। किं नाम कारणं भवेत् ! किमु चिरकालात् आश्रम-परिधिगतः पंजरबद्धः केसरी इव सः अद्य उन्मुक्तं वातावरणं लब्ध्वा वनश्रियं द्रष्टुं दूरङ्गतो भवेत् ? नहि तेनैतादृशेन प्रमादिना भाव्यम्। स तु मज्जन्म-दिवसोपलक्ष्ये शम्भोर्विशिष्टां स्तुतिं कर्तुं भणति स्म। कुत्र नु खलु गतो भवेत् ? अथवा दानवानां हस्तेषु तु न पुनरपि निपतितो भवेत्। तातपादं पृच्छामि। इदानीं तु अस्तंगमनवेला समायाति। सोऽपि सायंत-नाग्निहोत्राय सज्जो भवेत्। (गच्छति)

(२२)

(शुक्राचार्यकुटीरे)

दवयानी : तात ! कचोऽद्य पुनः क्वचिद्विलुप्तः ।

शुक्राचार्यः : किं भणसि देवयानि ?

देवयानी : सत्यं भणामि तात ! प्रातर्मदर्थं कमलान्याहर्तुं गतः किन्त्वधुनावधि न निवृत्तः । धिङ् मज्जन्मदिवसम् यत्कृते मया कमलवलिना भगवान् भूतभावनः समर्चनीयः संकल्पित आसीत् ।

शुक्राचार्यः : पुत्रि ! न त्वया स्वजन्मदिवस उपालब्धव्यः । अहमधुनेव संजीविन्या विद्यया कचमत्रोपस्थापयामि ।

(सञ्जीविनीं प्रयुङ्क्ते)

'वत्स ! कच ! बृहस्पतिसूनो ! यत्र कुत्राप्यसि, द्रागेवात्र एहि ।'

(समुद्रवीचिनां गर्जनम्)

कचः : अयमहं प्रणमामि गुरुवरं भगवन्तम् असुरगुरुं कवितनयं भार्गवं शुक्राचार्यम् !

देवयानी : कच ! मामाश्रमपदे विहायाद्य क्व, पलायितोऽभूः ?

शुक्राचार्यः : वत्स कच ! अद्य केनं गृहीतस्त्वम् ? सुस्पष्टं वद !

कचः : भगवन् । यदाहं देवयान्यै कमलान्याहर्तुमाश्रमात्किञ्चिद्दूरमेव गत आसम् तदा दानवैरहं गृहीतः—

(फ्लैशबैकपद्धत्या)

अंगारकः (दानवः) : क्व प्रयासि रे बृहस्पतेः पुत्रक ! चिराद् दृष्टोऽसि । शुक्राचार्यस्य संजीविनी त्वां कदापर्यन्तं पुनरुज्जीवयिष्यति । गुरोः भीता वयमाश्रमं न प्रविशामः—इत्यस्यायमाशयस्तु नास्ति यत्त्वमव-

द्योऽसि संवृत्तः ! अद्य तव प्राणान्तो भविता । इष्टं स्मर !

कचः : व्रतस्थोऽहम् । न मां व्यापादयन्तु भवन्तः। अहं देवयान्यै कमलानि आहर्तु मागतोऽस्मि । मयि तत्र न सम्प्राप्ते तस्याः जन्मदिनपूजा न सम्पद्येत ।

अंगारकः : अरे, तस्या जन्मदिनसपूजा अस्माभिः सम्पाद्यते तवं मरणदिनसम्पादनेन ! अस्माभिर्ज्ञातमस्ति यत्त्वं संजीविनीं विद्यां सिसाधयिषसि ? न वयं दानवा इमां विद्यां शत्रुहस्ते समर्पयिष्यामः । इयं विद्यास्माकं कल्याणायैवास्मद्गुरोः सकाशे स्थास्यति ।

कचः : विद्यादानं नाद्यैव करिष्यते आचार्यपादैः । पूर्वं तु मया सहस्रवर्षपर्यन्तं ब्रह्मचर्यव्रतं पालनीयमस्ति । अद्य मां गुरुसुतायै कमलानि दातुमनुजानन्तु भवन्तः । पुनः कदापि स्वेष्टं पूरयन्तु ।

अंगारकः : अतीव बुद्धिमानसि देवगुरोरात्मज ! न वयं स्वशत्रुं हस्तगतमेवं मुंचामः । अयं त्वमस्माभिः व्यापाद्यसे ।

(कण्ठरोधध्वनिः)

धूम्राक्ष ! मृतमिमं कचं पेषयित्वा समुद्राम्भसि मिश्रय ।

धूम्राक्षः : यथाज्ञापयति भवान् ।

(मांसकुट्टन ध्वनिः)

कचः : अंगारक ! अयं समुद्राम्भसि मिश्रितः कचदेहः । (समुद्र-ध्वनिः)

(फ्लैश समाप्तिः)

होरात्रयं मया समुद्रांभसि लीनेन व्यतीतम् । इदानीमेव भवताहमाहूतोऽभूवम् । तदनुसारं समुद्राम्भसो निर्गत्याहं भवत्पुरः समागतोऽस्मि ।

देवयानी : दिष्ट्या पुनरागतोऽसि। कथं मया मन्दभाग्यया त्वं कमलान्याहर्तुं प्रेषित आसीः।

कचः : क्षन्तव्योऽस्मि देवयानि ! समये कमलान्यातुं न क्षमोऽभवम् ।

देवयानी : भवतु। न कमलानि आहृतानि, त्वमागत-इत्येव वहुतरम्। मत्कृते त्वया कानि कानि कष्टानि न सोढानि !

कचः : न किमपि कष्टं सोढम्। भवत्याः कृपया तु अहं पुनरुज्जीवामि।

देवयानी : इदानीं सहस्रवर्षपूर्ति यावत्त्वया आश्रमे एव स्थातव्यम्। न कुत्रापि गन्तव्यम्।

कचः : यथेच्छति कल्याणि।

(अन्तरालसूचकं संगीतम्)

## (२३)

## (कचकुटीरे)

(प्रसन्नतासूचकं संगीतकम्)

देवयानी : ब्रह्मन् ! नमस्ते ! किं जानासि यदद्य तव ब्रह्मचर्यव्रतं पूर्णं भवति। सहस्रवर्षपर्यन्तं त्वया ब्रह्मचर्यं सम्यक् परिपालितम्। अद्य तातस्तुभ्यं विद्यां दास्यतीति मन्ये। कच ! वर्धापनम्।

कच : अनुगृहीतोऽस्मि देवयानि ! सहस्रं वर्षाणि दिनत्रयमिव व्यतीतानि। अत्र कारणम् आचार्यपादानां भवत्याश्च अनुग्रह एव। अद्याहं गुरुपूजार्थं वनान्तात् पुष्पाणि आनेष्यामि। वस्तुतो गुरुप्रसादादेवाहमद्य पूर्णव्रतो भवामि।

देवयानी : कच ! त्वया आश्रमाद् बहिर्न गन्तव्यम् ।

कचः : देवयानि ! न भेतव्यम् । इदानीं यावत्सुरक्षितोऽस्मि । अग्रेऽपि गुरोरनुग्रहेण सुरक्षित एव स्थास्यामि । अद्य मया आचार्यपादाः विविधैः पुष्पैरवश्यमेव पूजनीयाः सन्ति । शीघ्रमेव प्रतिनिवर्त्स्ये पुष्पसम्भारं गृहीत्वा ।

देवयानी : तर्हि मत्कृतेऽपि पुष्पाणि समानय । (स्वगतं) अहमपि पुष्पहारं निर्माय सम्पूर्णव्रतस्य तव सम्मानं करिष्यामि ।

कचः : यथाज्ञापयति अत्रभवती ।

(२४)

## (देवयानी कुटीरे)

(पादुकाध्वनिः)

शुक्राचार्यः : देवयानि ! कचः क्वास्ते ? अद्य तस्मै मया संजीविनी विद्या देयास्ति । नियमस्थितनेन तेन सहस्रवर्षाणि व्यतीतानि ।

देवयानी : तात ! मयापवारितोऽपि स भवत्पूजार्थं पुष्पाणि आहर्तुं वनान्तं गतः । भणति स्म यद् गुरोः कृपया सर्वमपि भद्रं भविष्यतोति ।

शुक्राचार्यः : वत्से ! अहमद्यापि तस्यानिष्टमुत्प्रेक्षे ।

देवयानी : पितः ! मा मैव भणतु । अनिष्टमपवारयतु ! यतः कुतोऽपि कचं समाहूय अत्रोपस्थापयतु ! तात ! (रोदिति)

शुक्राचार्यः : वत्से ! धैर्यं धर ।

देवयानी : पितः ! कचं विनाहं न जीवेयमिति सत्यं ब्रवीमि । अद्यनैव तमाहूय तस्मै विद्यां ददातु । यदि सोऽन्यथागतिं प्राप्तस्तदाहमपि जीवितं त्यक्ष्यामि (रोदिति) ।

शुक्राचार्यः :

बृहस्पतेः सुतः पुत्रि ! कचः प्रेतगतिं गतः ।
विद्यया जीवितोऽप्येवं हन्यते करवाणि किम्?
मैवं शुचो मा रुद देवयानि
न त्वादृशी मर्त्यमनुप्रशोचते ।
यस्यास्तव ब्रह्म च ब्राह्मणाश्च
सेन्द्रा देवा वसवोऽथाश्विनौ च ।
सुरद्विषश्चैव जगच्च सर्व-
मुपस्थाने संनमन्ति प्रभावात् ।
अशक्योऽसौ जीवयितुं द्विजातिः
संजीवितो वध्यते चैव भूयः ॥

देवयानी-मैवं भणतु तातः ।

यस्याङ्गिरा वृद्धतमः पितामहो
बृहस्पतिश्चापि पिता तपोनिधिः ।
ऋषेः पुत्रं तमथो वापि पौत्रं
कथं न शोचेयमहं न रुद्याम् ?
स ब्रह्मचारी च तपोधनश्च
सदोत्थितः कर्मसु चैव दक्षः ।
कचस्य मार्गं प्रतिपत्स्ये न भोक्ष्ये
प्रियो हि मे तात कचोऽभिरूपः ॥

शुक्राचार्यः-किं करवाणि ? असंशयं मामसुरा द्विषन्ति

ये मे आगतान् शिष्यान् सूदयन्ति ।
अब्राह्मणं कर्तुमिच्छन्ति रौद्रा-
स्ते मां यथा व्यभिचरन्ति नित्यम् ।
अप्यस्य पापस्य भवेदिहान्तः
कं ब्रह्महत्या न दहेदपीन्द्रम् ?

एते जाल्मा असुराः स्वराजनीतौ विद्यामपि कर्षयन्ति। धिगेतान्। परन्तु वत्से। त्वं शोकं मा गाः। अहमधुनैव कचं समाह्वयामि—

(संजीवनीं प्रयुङ्क्ते—'वत्स! कच? अत्रागच्छ'। (कचो विद्ययोपहूतः सन् शुक्राचार्यजठरादुत्तरं ददाति)

कच : प्रसीदतु भगवन्! भवत्पुत्रोपमः कचोऽहमित एव भवज्जठराद्भवन्तमभिवादये!

शुक्राचार्यः : (स्वगतं) आश्चर्यम्। कचो मम जठरादुत्तरं ददाति। कथं तत्रास्य गमनं घटितम्? (प्रकाशं) कच! त्वं केन पथा ममोदरे उपनीतस्तिष्ठसि? सत्वरं ब्रूहि!

कचः : (उदरात्) भगवन्! भवतः प्रसादान्मां स्मृतिर्न जहाति। यथा यच्च वृत्तं तत्सर्वं स्मरामि। परं भवत उदरं-विदीर्याहं वहिरायातुं नेच्छामि। यतो ह्येवं मे तपसः क्षयो भवेत्। गुरुघ्नतायाः पातकं कदापि न स्वीकरिष्ये अतः क्षन्तव्योऽस्मि भवत आह्वाने यन्नाहं भवत्पुरः समुपतिष्ठामि।

शुक्राचार्यः : दूरे तिष्ठतु बहिरागमनम् प्रथमेतत्तु ब्रूहि कथं त्वम् ममोदरे संप्रविष्टः इति?

कचः : भगवन्! अहं स्वब्रह्मचर्यव्रतस्यान्तिमे दिने गुरुपूजार्थं देवयान्याः कृते च पुष्पाण्याहर्तुमाश्रमाद् बहिरगच्छम्। किन्तु नातिदूरे एवाहं दानवैर्निगृहीतः

(फ्लेशबैकः)

दानवः : क्व चलितोऽसि रे बृहस्पतितनय?

कचः : अहं गुरुपूजार्थं पुष्पाण्याहर्तुं प्रस्थितोऽस्मि।

दानवः : श्रूयतेऽद्य तव ब्रह्मचर्यव्रतस्यान्तिमो दिवसः?

कचः : सत्यं भणति भवान्।

दानवः : तव जीवनस्याप्यन्तिमो दिवसोऽस्त्यद्य । वारद्वयं शुक्राचार्यकृपया जीवितोऽसि किन्त्वस्मिन् वारे त्व पुनः संजीवितो नैव भवितासि ।

कचः : भवन्तो मां वारम्वारं कथं मारयन्ति ? अहं तु भवतां किमप्यनिष्टं नाचरामि ।

दानवः : किमस्मात्परमस्माकमनिष्ट स्याद् यत्त्वं देवानाम्-अस्माकं शत्रूणां-सुरक्षायै संजीविनीं विद्यां ग्रहीतु-कामोऽसि ! न वयं त्वां सफलं दिदृक्षामः । अद्यैवं मारितः स्याः यथा न पुनरुज्जीवितो भविष्यसि ।

कचः : भो दानवाः ! मा मैवं कुर्वन्तु । मया गुरुचरणा वन्द-नीयाः सन्ति । मया गुरुसुतायै पुष्पाणि दातव्यानि सन्ति ।

दानवः : अस्माभिरपि कृतान्ताय तव जीवनं दातव्यमस्ति । असुरनगराद्वहिः शुक्राचार्यसाधिता विद्या नैव यास्यति । अयं म्रियसे त्वम् !

(कण्ठरोधध्वनि । हस्तपादप्रक्षेपध्वनिः)

(आश्वस्य) मृतोऽयं कचः । अधुनास्य देहो दग्ध्वा चूर्णयितव्यः । अयं चिताग्निः प्रज्वाल्यते (काष्ठक्षेपण-ध्वनिः) । अयं दह्यते कचः (अर्चिध्वनिः) अचिरादेव भस्मनि परिणतः स्यात् । किन्तु समुद्र जलादपि यदा कचदेहकणाः परस्परं संयुज्य जीवितास्तदेदानीमपि कचस्य पुनर्जीवनं कथं न शंकितं स्यात् ? को नु उपाय-स्तिष्ठति येन शुक्राचार्योऽप्येनं पुनरुज्जीवयितुं न शक्नुयात् ?

(घूर्णयन्ती मदिरा समुदेति)

मदिरा : उपायश्चिन्त्यते ? अहमस्म्युपायः ।

दानवः : सुन्दरि ! का त्वम् ? कुतूहलं वर्धयसि ?

मदिरा : मूर्खाः। नावगच्छथ माम्? अहमस्मि मदिरा। अहमस्मि वारुणी। अहमस्मि सुरा। मत्कृपया यूयं स्वोद्देश्ये सफलाः भवितुमर्हथ।

दानवः : कथमिव ?

मदिरा : मयि कचस्य भस्म सम्मिश्र्य मां शुक्राचार्यं पाययथ। स्वास्थ्यवतां स्वास्थ्यं, बलवतां बलं, स्मृतिवतां स्मृतिं, विवेकिनां विवेकम्, उदाराणामौदार्यं, विद्यावतां विद्यामहं हेलयैव हर्तुं क्षमा ! जीवितानां मारणायाहममोघोपायोऽस्मि। मयि कचस्य भस्म मिश्रितं यदि स्यात्तदा कचः पुरुज्जीवयितुमेव नेच्छेत्। नापि मां निपीय शुक्राचार्यस्तमौदार्येण पुरुज्जीवयितुकामः स्यात्। मूर्खा दानवाः। मां शरणं गच्छथ। अहं मदिरा। अहं वारुणी ! अहं सुरा ! (समदं हसति)

दानवः : युक्तं भणसि मदिरे ! अद्यावधि क्व स्थिता आसीः ? अद्य वयं त्वां शरणं गच्छामः। त्वयि कचस्य भस्म मिश्रयित्वा वृषपर्वणः सभायां स्थिताय शुक्राचार्याय त्वां दास्यामः।

(फ्लैशबैकसमाप्तिः)

कचः : भगवन् ! मम भस्म दानवैर्मदिरायां मिश्रितम्। तच्च स्वर्णपात्रे निधाय मधुरपेयच्छलेन भवते दत्तम्। इदानीमहं भवता आहूतो भवदुदरात्प्रतिब्रवीमि ! प्रभो ! अहमत्रैव स्थित्वा कष्टानि सहे ! किन्तु गुरोरुदरविदारणं न करोमि।

शुक्राचार्यः : दुष्टे मदिरे। त्वया गुरुशिष्यौ द्वावपि स्वसम्पर्केण संकटं प्रापितौ। (निःश्वस्य) वत्से देवयानि ! अधुना

तव किं प्रियं करवाणि ? कचस्य जीवनं मम वधेनैव संभवति । मद्गतः कचो मत्कुक्षिभेदनं विना न बहिरागन्तुं शक्नोति ।

देवयानी : (रुदती) तात ! कचस्य नाशो भवतश्चोपघातः-शोकाग्निकल्पौ द्वावपि मां दहेताम् । कचस्य नाशेऽहं जीवनपर्यन्तं शान्तिं न लप्स्ये, भवतश्चोपघातेऽहं जीवितुं न शक्नोमि । किमर्थं जीवाम्यहं मन्दभाग्या ? अहमपि गरलं निपीय जीवनं समापयामि ।

शुक्राचार्य : दानवैर्यदाचरितं तत्त्वाचरितमेव । कथम् अहमपि मदिरां निपीय स्ववर्चो विस्मृतवान् ? देवयानि ! शोकं मा गाः अहमधुनैवं तव जीवनं रक्षामि । अहमधुनैव कचं स्वादरादबहिरानयामि । उदरस्थायैवाहं संजीविनीं विद्यां ददामि । सिद्धविद्योऽयं ममोदरं विदार्य बहिरागत्य मां विद्याप्रयोगेण पुनरुज्जीवयिष्यति । (कचं प्रति)

'संसिद्धरूपोऽसि बृहस्पते सुत !
यत् त्वां भक्तं भजते देवयानी ।
विद्यामिमां प्राप्नुहि जीविनीं त्वं
न चेदिन्द्रः कचरूपो त्वमद्य ।।

न निवर्तेत् पुनर्जीवन् कश्चिदन्यो ममोदरात् ।
ब्राह्मणं वर्जयित्वैकं तस्माद्विद्यामवाप्नुहि ।।
पुत्रो भूत्वा भावय भावितो मा-
मस्मद्देहादुपनिष्क्रम्य तात ।

 

समीक्षेथा धर्मवतीमवेक्षां
गुरोः सकाशात् प्राप्य विद्यां सविद्यः ॥

कचः : (उदरात्) अयमहं संजीविनीं विद्यां गृह्णामि ! भगवन् यथाभवदादिष्टमधुनैव समाचरामि !

(विस्फोटोपमध्वनिः)

देवयानी : (स्वगतं) आश्चर्यम् ! पौर्णमास्यां निशामुखे प्राच्यां दिशि यथा नवेन्दुरुदेति तथैव गृहीतसंजीविनीविद्योऽयं कचस्तातोदरान्निष्क्रान्तः। इदानीं च विद्यया तात संजीवयति। नाहमस्मिन् कर्मणि विघ्नमुत्पादयामि। तूष्णीमेव तिष्ठामि।

कचः : साक्षाद्ब्रह्मराशे ! गुरो शुक्राचार्य ! उत्तिष्ठतु भवान्। एष प्रणमामि भवन्तं भवच्छिष्योऽहं कचः।

शुक्राचार्यः : (उत्थाय) वत्स ! चिरंजीव ! सिद्धविद्योऽसि !

कचः : आचार्यपाद ! यदपि मत्काशे दृश्यते तत्सर्वमपि भवतोऽनुग्रहस्यैव फलम्। गुरुरेव हि शिष्यस्य माता पिता च भवति—

यः श्रोत्रयोरमृतं संनिषिञ्चेद्
विद्यामविद्यस्य यथा ममायम्।
तं मन्ये पितरं मातरं च
तस्मै न द्रुह्येत् कृतमस्य जानन् ॥

ऋतस्य दातारमनुत्तमस्य
निधिं निधीनामपि लब्धविद्याः ।
ये नाद्रियन्ते गुरुमर्चनीयं
पापाँल्लोकांस्ते व्रजन्त्यप्रतिष्ठाः ॥

भगवन् ! लब्धविद्येन मया गुरुदक्षिणा भवते कथं समर्पणीया स्यात् ?

शुक्राचार्यः : वत्स ! शिष्येण गुरवे दक्षिणावश्य देया स्यात् । अद्य मया सुरापानाद् वंचना संज्ञानाशश्च प्राप्तौ । विद्यावतां विद्यासाधकानां च कृते सुरापानमत्यन्त-महितकरम् । यदि त्वं मह्यं दक्षिणां दित्सुरसि तर्हि प्रतिज्ञा क्रियताम् यत्कदापि सुरां न पास्यसि यतो हि ममेयं भविष्यवाणी—

'यो ब्राह्मणोऽद्यप्रभृतीह कश्चि-
न्मोहात् सुरां पास्यति मन्दबुद्धिः ।
अपेतधर्मा ब्रह्महा चैव सः स्या-
दस्मिंल्लोके गर्हितः स्यात् परे च ॥'

वत्स ! यथा त्वं गर्हितो न स्यास्तथा प्रतिजानीहि ।

कचः : आचार्यपाद ! अयमहमङ्गिरसः पौत्रो बृहस्पते पुत्रो भवतः शिष्यः कचः प्रतिजाने यत्कदापि सुरापानं न करिष्ये ।

शुक्राचार्यः : प्रीतोऽस्मि । अधुना दानवास्ते भीतिमुत्पादयितुं न समर्थाः । सहस्रवर्षाणि तपश्चरित्वाधुना त्वं मत्तुल्य-

प्रभावोऽसि संवृत्तः। महात्मासि! ब्रह्मभूतो ब्राह्मणोऽसि। यथेष्टं स्थानं वस! अहमिममुदन्तं दानवेभ्यो दातुं वृषपर्वणः सभायां गच्छामि!

देवयानी : (सोल्लासं) अहो! कचः सिद्धविद्योऽस्ति संवृत्तः! तातोऽपि संजीवितः। मुदो न मान्ति मे मनसि। अहमद्य त्रिलोक्यां प्रसन्नतमा बालास्मि। कचो मामिदानीमाकारयिष्यति। अहमपि तं वर्धापयिष्यामि।

(प्रसन्नताद्योतकं क्षिप्रं वीणावादनसंगीतम्)

(२५)

कचः : देवयानि! नमस्करोमि अत्रभवतीम्। सहस्रवर्षपर्यन्तं भवत्याः मत्कृते बहु कष्टं सोढम्। भवत्प्रेरणयैव गुरुपादैरहं वारंवारं संजीवितः। इदानीं समावृतव्रतोऽहं गुरुणा त्रिदशावासं प्रस्थातुमनुज्ञातोऽस्मि। शब्दाः न सन्ति मत्पार्श्वे यैर्भवत्याः कृतज्ञतां व्यक्तीकरोमि। इदानीं भवत्यपि अनुमन्यताम् मां त्रिदशपुरीं गन्तुम्।

देवयानी : कच! इदानीं यावन्मया स्वमनोगतं भवते न निवेदितम्। किन्तु त्वयि त्रिदशपुरीं प्रति यातुकामे सति कथं मौनमाकलयेयम्?

कचः : ननु भणतु स्वमनोगतम् गुरुपुत्री।

देवयानी : किमु वाचा प्रकाशनीयमेव स्यात्? कच! इदानीं यावद्भवतो भक्ताहम् अस्मात्परं पूज्यबृहस्पतेः पुत्रवधू भूत्वा तत्सेवां कर्तुम् अर्हामि किम्?

कचः : भद्रे ! भवती मत्कृते माननाया गुरुसुतास्ति । न भवत्यायं प्रस्तावः करणीयः ।

देवयानी : कच ! न त्वं मम पितुः पुत्रोऽसि ! मया साकं तव विवाहो न अयुक्तः स्यात् । त्वयि मे निश्चला प्रीतिरस्तीति निवेदयन्त्यपि अहं भृशं लज्जे । कथं शपथैस्त्वयि स्वभक्तिं प्रीतिं च विभावयानि ? धर्मज्ञ कच ! न मामनागसं त्यक्तुमर्हसि !

कचः : शुभव्रते ! माम् अनियोज्ये नियोगे कथं नियुनंक्षि ? त्वं मह्यं गुरोर्गुरुतरासि । विशालाक्षि ! यत्र भवत्या उषितं तत्रैव काव्यस्य कुक्षावहमप्युषितोऽस्मि । अतो भवती धर्मतो मे भगिनी अस्ति । धर्मभावना अस्माद्विवाहान्मां रुणद्धि ।

देवयानी : कच ! अतीव धार्मिको भवसि । सनातनं धर्मं कैतवप्रोज्झितं प्रेमाणं तिरस्कृत्य आरोपितां रूढिं ख्यापयसि ? उपरिष्टादत्यन्तं विनीतो मधुरश्च दृश्यसे किन्तु चेतसि अत्यन्तं निष्ठुरोऽसि । वंचक ! इदानीं समुतचिमनुनयं त्यक्त्वा यद् ब्रवीमि तच्छृणु—

'यदि मां धर्मकार्यार्थे प्रत्याख्यास्यसि याचितः ।
ततः कच न ते विद्या सिद्धिमेषा गमिष्यति ॥'

(आघात-संगीतम्)

(किञ्चिद्विरामानन्तरम्)

कचः : देवयानि ! मया तव प्रत्याख्यानं कस्मादपि दोषान्न

कृतमपितु 'त्वं मम गुरुसुतासी' ति कृत्वा कृतम्।
अस्मिन् विषये गुरुणापि अहं नानुज्ञातोऽस्मि।
देवयानि! आर्षं धर्मं ब्रुवाणोऽहं त्वया कामतः
शप्तोऽस्मि न तु धर्मतः। त्वं धर्मस्य फलं कामरूपेणे-
च्छसि। देवयानि! तव शापमहमंगीकरोमि। परं
शृणु, तवापि कामना सफला न भविष्यति। 'ऋषिपुत्रो
न ते कश्चिज्जातु पाणिं ग्रहीष्यति।' अपि च
देवयानि!

**'फलिष्यति न ते विद्या यत्त्वं मामात्थ तत्तथा।**
**अध्यापयिष्यामि तु यं तस्य विद्या फलिष्यति॥'**

एषोऽहं त्रिदशालयं गच्छामि।

देवयानी : हा तात! भवतः शिष्येणातिदुष्करमाचरितम्। ('ऋषिपुत्रो न ते कश्चिज्जातु पाणिं ग्रहीष्यति' इत्यस्य प्रतिध्वनिः) भवता यस्मै विद्या दत्ता तेन मह्यं शापो दतः। (मूच्छिता)

## (२६)

## (सुरनगरप्रत्यावर्तनमार्गे निःशब्दता)

कचः : (स्वगतं) सहस्रवर्षाणि व्यतीतानि यदाहमनेन मार्गेण असुरेन्द्रनगरमागच्छम्। कियत् परिवर्तनं संवृत्तम्! तस्मिन् दिने मार्गपाश्वंस्थिताः पादपाः मामाकारयन्त इव दृश्यन्ते स्म किन्त्वद्यैते वृक्षा मौनमाकलय्य मामधि-क्षिपन्त इव लक्ष्यन्ते! देवयानीं शप्त्वा मया स्वतपसो

हानिरेव कृता । का आवश्यकतासीत् प्रतिशापदानस्य? यदि देवयान्याहं शप्तस्तदा मया दोषेण दोषस्य प्रतिवादो नैव कर्त्तव्य आसीत् ? कथं नु चैतत्संवृत्तम् —विभावयन्नपि न विभावयामि ?

मदिरा : (साट्टहासं) विभावयितुमिच्छसि ?

कचः : कासि त्वम् !

मदिरा : विस्मृतोऽसि माम् ? सर्वात्मना मयि विलीयापि मां नहं प्रत्यभिजानासि ? कच ! अहं मदिरास्मि अहं वारुणी! अहं सुरा !

कचः : ओः ! तर्हि त्वमेवासि अस्य दुःखान्तनाटकस्य सूत्र-धारिणी ? तवैव प्रभावादेतत्संवृत्तम् ? एकावरं त्वयि मम भस्म किं मिश्रितम्, त्वया चिरकालं यावन्मम मनः-सन्तुलनमेव नाशितम्, मम स्वभावे परुषता समानीता, मम विवेको नाशितः, धैर्यधुरीणस्यापि मम धैर्यं विलोपितम् । त्वत्सम्पर्कात्पूर्वं मया कदापि देवयानी नापमानितासीत् किन्तु त्वत्सम्पर्कादूर्ध्वं मया सा वराकी अभिशप्ता । महिममयी नारीशक्तिरेव अधिक्षिप्ता । ओः देवयानि ! भृशमनुतप्तोऽस्मि ! त्वया मत्कृते किं किं न कृतम् ? परं मया त्वयि दारुण-माचरितम् । क्षमस्व मां देवयानि ! क्षमस्व !

मदिरा : ऋषिपुत्र ! विस्मर देवयानीम् । इयम त्वां विनोदयामि ।

कचः : दूरमपेहि दुष्टे !

मदिरा : किमिति ?

कचः : तव चिन्तनमपि जनस्य कृते अभिशापः, का वार्ता सम्पर्कस्य। त्वया सह किंचित्-कालसम्पर्काद् यदा सिद्धविद्यस्यापि मम स्वभावोऽसन्तुलितः संजातस्तदा तेषां का दशा स्यात् ये अनिशं तव प्रभावे तिष्ठन्ति ! किं न जानासि गुरोः शुक्राचार्यस्य मर्यादाम् ?

मदिरा : का सा मर्यादा ?

कचः : इयं सा विश्रुता मर्यादा

(शुक्राचार्यध्वनिः)

**यो ब्राह्मणोऽद्यप्रभृतीह कश्चि-**
**न्मोहात् सुरां पास्यति मन्दबुद्धिः।**
**अपेतधर्मा ब्रह्महा चैव सः स्याद्**
**अस्मिँल्लोके गर्हितः स्यात् परे च ॥**



# विक्रमोर्वशीयस्य

## ध्वनिनाट्यरूपान्तरम्

रूपान्तरकारः

**डा० रमाकान्त शुक्लः**

# पात्राणि

**पुरुषपात्राणि**

**सूत्रधारः**

**राजा/पुरूरवा:** : प्रतिष्ठानपुरस्य राजा नाटकस्य नायकः

**राक्षसः/केशी दानवाः** : उर्वश्या अपहर्ता दानवः

**चित्ररथः** : गन्धर्वेश्वरः

**माणवकः/विदूषकः** : पुरूरवसो मित्रम्

**देवदूतः**

**उद्घोषकः**

**भरतमुनिः**

**दर्शकाः** : (१, २, ३)

**सुरेन्द्रः** : देवराजः

**वाचकः**

**नारदः** : देवर्षिः

**आयुः** : पुरूरवस उर्वश्यां जातः पुत्रः

**स्त्रीपात्राणि**

**नटी**

**उर्वशी** : अप्सरा नाटकस्य नायिका ·

**चित्रलेखा :**

**सहजन्या** : अप्सरसः

**रम्भा** :

**मेनका** :

**देवी-राज्ञी** / काशिराजस्य पुत्री । पुरूरवसः पत्नी

**निपुणिका** : राज्ञः परिचा-रिका

**तापसी** : तपस्विनी

**यवनी** : राज्ञः परिचा-रिका

**परिजनः** : राज्ञाः परिचारिकाः

# विक्रमोर्वशीयस्य ध्वनिनाट्यरूपान्तरम्

(सङ्गीतान्ते एकलस्वरेण सामूहिकस्वरेण वा नान्दीपाठः प्रस्तूयते)

वेदान्तेषु यमाहुरेकपुरुषं व्याप्य स्थितं रोदसी
यस्मिन्नीश्वर इत्यनन्यविषयः शब्दो यथार्थाक्षरः ।
अन्तर्यश्च मुमुक्षुभिर्नियमितप्राणादिभिर्मृग्यते
सः स्थाणुः स्थिरभक्तियोगसुलभो निःश्रेयसायास्तु वः ॥

पुरा कवीनां गणनाप्रसंगे
कनिष्ठिकाधिष्ठितकालिदासा ।
अद्यापि तत्तुल्यकवेरभावा-
दनामिका स्वार्थवती बभूव ॥

सूत्रधारः : नमः कालिदासाय ! येन स्वर्गः पृथिव्यां प्रणयीकृतः । आर्ये ! अपि स्मरसि यदद्यास्माभिः कालिदास-रचितस्य विक्रमोर्वशीयंनामत्रोटकस्य नैकध्वनि-नाट्कानां प्रणेत्रा निर्देष्ट्रा अभिनेत्रा च रमाकान्त-शुक्लेन कृतं ध्वनि-नाट्यरूपान्तरं प्रस्तोतव्यम् ।

नटी : कथं न स्मरामि ? एतादृशी प्रेमकथा कथं विस्मृता भवेत् यत्र स्वर्गतो भूगतश्च प्राणिनौ परस्परं समपर्णशीलौ भवतः !

सूत्रधारः : यत्र च प्रेम कस्यापि चित्ते विद्वेषं न जनयति !

नटी : यत्र च बलात्कारिणोऽपहरणकर्तारश्च समुचितं दण्ड्यन्ते ।

सूत्रधारः : ननु जघन्या दानवास्ते ये इच्छा-विवर्जितां कामपि सुन्दरीं बलादपहरन्ति ।

(१)

(दूरतो ध्वनिरुद्भवति)

**अप्सरसः** : आर्याः परित्रायध्वं परित्रायध्वम् ! यः सुरपक्षपाती यस्य वाम्बरतले गतिरस्ति ।

**सूत्रधारः** : अये किं नु खलु मद्विज्ञापनानन्तरमार्तानां कुररीणामिवाकाले शब्दः श्रूयते । (विचिन्त्य) भवतु । ज्ञातम् ।

ऊरूद्भवा नरसखस्य मुनेः सुरस्त्री
कैलासनाथमनुसृत्य निवर्तमाना ।
बन्दीकृता विबुधशत्रुभिरर्धमार्गे
क्रन्दत्यतः करुणमप्सरसां गणोऽयम् ।।

**अप्सरसः** : आर्याः परित्रायध्वं परित्रायध्वम् । यः सुरपक्षपाती यस्य वाम्बरतले गतिरस्ति ।

**राजा** : अलमाक्रन्दितेन । सूर्योपस्थाननिवृत्तं पुरूरवसं मामेत्य कथ्यतां कुतो भवत्यः परित्रातव्या इति ।

**रम्भा** : असुरावलेपात् ।

**राजा** : किं पुनरसुरावलेपेन भवतीनामपराद्धम् ?

**रम्भा** : शृणोतु महाराजः । या तपोविशेषशंकितस्य सुकुमारं प्रहरणं महेन्द्रस्य, प्रत्यादेशो रूपगर्वितायाः श्रीगौर्याः, अलंकारः सर्गस्य, सा नः प्रियसख्युर्वशी कुबेरभवनान्निवर्तमाना केनापि दानवेन चित्रलेखाद्वितीया अर्धपथ एव बन्दिग्राहं गृहीता ।

**राजा** : अपि ज्ञायते कतमेन दिग्विभागेन गतः स जाल्मः ?

**अप्सरसः** : ऐशान्या दिशा ।

**राजा** : तेन हि मुच्यतां विषादः । यतिष्ये वः सखीप्रत्यानयनाय !

**अप्सरसः** : सदृशमेतत्सोमवंशसंभवस्य ।

**राजा** : क्व पुनर्मां भवत्यः प्रतिपालयिष्यन्ति ?

**अप्सरसः** : एतस्मिन् हेमकूटशिखरे ।

**राजा** : सूत ! ऐशानीं दिशं प्रति चोदयाश्वानाशुगमनाय ।

**सूतः** : यदाज्ञापयत्यायुष्मान् (रथघर्घरध्वनिः) ।

**राजा** : (रथवेगं रूपयित्वा) साधु साधु । अनेन रथवेगेन पूर्वप्रस्थितं वैनतेयमप्यासादयेयम् । किं पुनस्तमपकारिणं मघोनः ! (रथध्वनिः) सूत ! अयं दृश्यते स दुष्टो दानवः । तिष्ठ दुरात्मन् । कुत्र निलीयसे ! मुञ्चोर्वशीम् अन्यथा निहन्यसे ।
(दूरत उर्वशी-चित्रलेखयोर्ध्वनिः श्रूयते)

**उर्वशी** : मुञ्च नीच ! मुञ्च माम् !

**राक्षस** : (साट्टहासम्)—हस्ते समागतं मणिं कथं त्यजामि ! सुन्दरि । इदानीं विस्मर देवेन्द्रम् !

**चित्रलेखा** : राक्षसापसद ! लप्स्यसे स्वपापस्य फलम् ! नीच ! कथं न मुंचसि मे सखीमुर्वशीम् !

**राक्षसः** : अधुना तु युवाभ्यामेव सखीजनोः मुक्तः । आगच्छतम् । यथाहमादिशामि तथा कुरुतम् (अट्टहासं करोति).

**राजा** : दुष्ट राक्षस ! तिष्ठ । अयं नः भवसि ।

**चित्रलेखा** : सखि उर्वशि ! अयं रथारूढः कोऽपि वीरोऽस्माकं भाग्यात्सम्प्राप्तः । आर्याः परित्रायध्वम् परित्रायध्वम् । एष बलादपहरति दानवो मे सखीमुर्वशीम् ।

**राजा** : मा भैषिष्टम् । इदं मम वायव्यमस्त्रं दानवगणं दूरं प्रक्षिपति ।

**राक्षस-गणः** : धावथ ! एतयोर्दुष्टाप्सरसोः पक्षपाती अयं कोऽपि अस्मान् पराभवति । आः ! (कोलाहलं कुर्वाणानां राक्षसानां पालायनं सूच्यते)

**चित्रलेखा** : हा धिक् ! हा धिक् ! मूर्च्छामापन्ना मे प्रियसखी उर्वशी !

पुरूरवाः : मा शुचः चित्रलेखे ! अचिरमेवेयं स्वां प्रकृतिमापस्यते ! सूत ! एहि सखीसहितामुर्वशीं रथमारोहयावः ।

चित्रलेखा : ननु अत्रभवन्तं कं विजानीयाम् ?

सूतः : सुन्दरि ! अलं चिन्तया ! अयं महाराजः पुरूरवाः । भवत्योः सखीभिर्निवेदितापहरणवृत्तान्तो भवत्त्राणायात्र सम्प्राप्तः । अहं चास्य सारथिः ।

पुरूरवाः : सुन्दरि ! अलं वितर्केण । अचिरादेवात्रभवत्यौ सखीजनं प्रेक्षिष्येते । एहि रथमारुह । अयमहं ते मूर्च्छितां सखीं रथमारोहयामि !

(तथाकरणं संसूच्य सूतं प्रति) सूत ! नोदय अश्वान् हेमकूटशिखरं प्रति । तत्रैतयोः सखीगणः इमे प्रतीक्षते ।

सूतः : यदाज्ञापयति देवः ।

(रथप्रस्थाध्वनिः)

चित्रलेखा : सखि ! उर्वशी ! समाश्वसिहि ! समाश्वसिहि ।

राजा : सुन्दरि ! समाश्वसिहि । समाश्वसिहि !

चित्रलेखा : अहो कथमुच्छ्वसितमात्रसंभावितजीविता अद्याप्येषा संज्ञां न प्रतिपद्यते !

राजा : बलवदत्रभवती परित्रस्ता ।

चित्रलेखा : सखि उर्वशि ! पर्यवस्थापयात्मानम् । अनप्सरेव प्रतिभासि ।

राजा : मुञ्चति न तावदस्या भयकम्पः कुसुमकोमलं हृदयम् । (उर्वश्या प्रत्यागमनसूचनम्) चित्रलेखे ! दिष्ट्या वर्धसे ! प्रकृतिमापन्ना ते प्रियसखी !

**चित्रलेखा** : सखि उर्वशि ! विस्रब्धा भव । आपन्नानुकम्पिना महाराजेन प्रतिहताः खलु ते त्रिदशपरिपन्थिनो हताशदानवाः ।

**उर्वशी** : किं प्रभावदर्शिना महेन्द्रेणाभ्युपपन्नास्मि ?

**चित्रलेखा** : न महेन्द्रेण । महेन्द्रसदृशानुभावेन राजर्षिणा पुरूरवसा ।

**उर्वशी** : (आत्मगतं) उपकृतं खलु दानवेन्द्रसंरम्भेण ।

**राजा** : (उर्वशीं विलोक्य आत्मगतम्) स्थाने खलु नारायणमृषिं विलोभयन्त्यस्तदूरुसंभवामिमां विलोक्य व्रीडिताः सर्वा अप्सरस इति ।

**उर्वशी** : सखि चित्रलेखे ! सखीजनः कुत्र खलु भवेत् ?

**चित्रलेखा** : सखि, अभयप्रदायी महाराजो जानाति ।

**राजा** : महति विषादे वर्तते सखीजनः ! पश्यतु भवती ।

यदृच्छया त्वं सकृदप्यवन्ध्ययोः
पथि स्थिता सुंदरि यस्य नेत्रयोः ।
त्वया विना सोऽपि सुमुत्सुको भवेत्
सखीजनस्ते किमुतार्द्रसौहृदः ।

**उर्वशी** : (आत्मगतं) अमृतं खलु ते वचनम् ! अथवा चन्द्रात्मृतमिति किमाश्चर्यम् । (प्रकाशं) अत एव मे प्रेक्षितुं त्वरते हृदयम् ।

**राजा** : पश्य
एताः सुतनु मुखं ते सख्यः पश्यन्ति हेमकूटगताः ।
उत्सुकनयंना लोकश्चन्द्रमिवोपप्लवान्मुक्तम् ॥

**चित्रलेखा** : सखि किम् प्रेक्षसे ?

**उर्वशी** : चित्रलेखा ! ननु समदुःखगतः पीयते लोचनाभ्याम् ।

चित्रलेखा : (सस्मितम्) अयि कः ?

उर्वशी : ननु प्रणयिजनः ।

राजा : सूत ! इदं तच्छैलशिखरम् । अवतारय रथम् ।

सूतः : यदाज्ञापयत्यायुष्मान् ।
(रथावतारध्वनिः)

राजा : (स्वगतम्) हन्त सफलो मे विषमावतारः ।
यदिदं रथसंक्षोभादङ्गेनाङ्गं ममायतेक्षणया ।
स्पृष्टं सरोमकण्टकमङ्कुरितं मनसिजेनेव ।

उर्वशी : सखि किमपि परतोऽपसर ।

चित्रलेखा : नाहं शक्नोमि तथाकर्तुम् ।
(दूरतः श्रूयतेऽप्सरसां संलापः)

रम्भा : सखि मेनके । चित्रलेखाद्वितीयां प्रियसखीमुर्वशीं गृहीत्वा विशाखासहित इव भगवान्सोमः समुपस्थितो राजर्षिः पुरूरवाः ।

मेनका : सखि रम्भे । द्वे अपि नोऽत्र प्रिये उपनते । इयं प्रत्यानीता प्रियसखी । अयं चापरिक्षतशरीरो राजर्षिः । कथं वा मन्यते सहजन्या ?

सहजन्या : सखि ! युक्तं भणसि । दुर्जयो दानवगणः ।

रम्भा : एत, प्रियकारिणं संभावयामो राजर्षिम् ।
(सर्वासामुपसर्पणसूचनम्)

राजा : सूत ! उपश्लेषय रथम् येनेयं समुत्सुका उर्वशी समत्सुकाभिः सखीभिः पुनरपि मिलेत् ।
(रथोपश्लेषध्वनिः)

अप्सरसः : दिष्ट्या महाराजो विजयेन वर्धते !

राजा : भवत्यश्च सखीसमागमेन ।

उर्वशी : सख्यः अधिकं परिष्वजथ । न खलु मे आसीदाश्वासो यथा पुनरपि सखीजनं प्रेक्षिष्य इति ।
(सख्यः परिष्वजनं सूचयन्ति)

मेनका : (साशंसम्) सर्वथा कल्पशतं महाराजः पृथिवीं पालयन्भवन्तु ।

सूतः : आयुष्मन् । पूर्वस्यां दिशि महता रथवेगेनोपदर्शितः शब्दः ।

अयं च गगनात्कोऽपि तप्तचामीकराङ्गदः ।
अधिरोहति शैलाग्रं तडित्वानिव तोयदः ॥
(चित्ररथप्रवेशध्वनिः)

अप्सरसः : अहो चित्ररथः !

चित्ररथः : दिष्ट्या महेन्द्रोपकारपर्याप्तेन विक्रममहिम्ना वर्धते भवान् ।

राजा : अये गन्धर्वराजः ! (रथादवतरणं संसूच्य) स्वागतम् प्रियसुहृदे ।

चित्ररथः : वयस्य, केशिना हृतामुर्वशीं नारदादुपश्रुत्य प्रत्याहरणार्थमस्याः शतक्रतुना गंधर्वसेना समादिष्टा । ततो वयमन्तरा चारणेभ्यस्त्वदीयं जयोदाहरणं श्रुत्वा त्वामिहस्थमुपागताः । स भवानिमां पुरस्कृत्य सहास्माभिर्मघवन्तं द्रष्टुमर्हति ।

राजा : सखे नायमवसरो मम शतक्रतुं द्रष्टुम् । अतस्त्वमेवात्रभवतीं प्रभोरन्तिकं प्रापय ।

चित्ररथः : यथा भवान्मन्यते । इत इतो भवत्यः ।

(प्रस्थानध्वनिः)

उर्वशी : सखि चित्रलेखे । उपकारिणं राजर्षिं न शक्नोम्यामान्त्रयितुम् । तत्त्वमेव मे मुखं भव ।

चित्रलेखा : महाराज ! उर्वशी विज्ञापयति महाराजेनाभ्यनुज्ञातेच्छामि प्रियसखीमिव महाराजस्य कीर्तिं सुरलोकं नेतुम् ।

राजा : गम्यतां पुनर्दर्शनाय ।
(सगन्धर्वानां सर्वासामप्सरसामाकाशोत्पतनं सूच्यते)

उर्वशी : (उत्पतनभंगं रूपयित्वा) अहो लताविटपे एषैकावली वैजयन्तिका मे लग्ना । सखि चित्रलेखे ! मोचय तावदेताम् ।

चित्रलेखा : (विहस्य) एनां त्वां वा ? दृढं खलु लग्नेयम् ! अशक्यं मोचयितुम् ।

उर्वशी : अलं परिहासेन । मोचय तावदेनाम् ।

चित्रलेखा : आम्, दुर्मोच्येव मे प्रतिभाति । तथापि मोचयिष्ये तावत् ।

उर्वशी : (स्मितं कृत्वा) प्रियसखि ! स्मरस्व खल्वेतदात्मनो वचनम् !

राजा : (स्वगतम्)

प्रियमाचरितं लते त्वया मे
गमनेऽस्याः क्षणविघ्नमाचरन्त्या ।
यदियं पुनरप्यपाङ्गनेत्रा
परिवृत्तार्धमुखी मया हि दृष्टा ।

चित्रलेखा : उर्वशि ! राजानामालोकयन्ती उत्पतन्तं सखीजनं सनिः श्वासं कथं पश्यसि? ननु एकावली तु मोचिता मया !

सूतः : आयुष्मन् ! अयं सुरेन्द्रस्य कृतापराधान्
प्रक्षिप्य दैत्यांल्लवणाम्बुराशौ ।
वायव्यमस्त्रं शरधिं पुनस्ते
महोरगः श्वभ्रमिव प्रविष्टम् ।।

राजा : तेन ह्युपश्लेषय रथम् । यावदारोहामि ।

चित्रलेखा : उर्वशि, सस्पृहं राजानमवलोकयन्ती ननु किं चिन्तयसि ?

उर्वशी : अपि नाम पुनरप्युपकारिणमेनं प्रेक्षिष्ये ।
(आकाशोत्पतनसूचनम्)

**राजा** : अहो दुर्लभाभिलाषी मदनः !

एषा मनो मे प्रसभं शरीरात्

पितुः पदं मध्यममुत्सृजन्ती ।

सुरांगना कर्षति खण्डिताग्रात्

सूत्रं मृणालादिव राजहंसी ॥

(२)

**वाचकः** : प्रथमदर्शनादेव उर्वशी पुरूरवसश्चित्ते पुरूरवाश्च उर्वश्याश्चेतसि पदं चक्रतुः । राजा अन्तःपुरे, उर्वशी च सुरलोके धृतिं न अलभताम् । प्रेमदेवता उर्वशीं पुरूरवसं द्रष्टुं न्ययोजयत् । यदा पुरूरवाः स्वमित्रेण माणवकेन साकं विविक्तं प्रमदवनं सेवमान आसीत्तदा चित्रलेखाद्वितीया उर्वशी तं द्रष्टुमागता । कामः द्वयोः दर्शनालापसुखेन द्वावपि संयोजयामास । किन्तु तदैव देवदूतेनोद्घोषितम्—

**देवदूतः** : चित्रलेखे ! त्वरय उर्वशीम् !

मुनिना भरतेन यः प्रयोगो

भवतीष्वष्टरसाश्रयो नियुक्तः ।

ललिताभिनयं तमद्य भर्ता

मरुतां द्रष्टुमनाः सलोकपालः ॥

**उर्वशी** : आः किमिदमापतितम् ! चित्रलेखे !

(३)

**वाचकः** : ईश्वरनियोगं पालयितुमुर्वशी सुरलोकं प्रयाता । इतश्च पुरूरवसो राज्ञी काशिराजपुत्री उर्वशी-पुरूरवसोर्वृत्तान्तेन परिचिता जाता । सा कोपं गता । पादयोः पतितायापि राज्ञे न सा क्षमामदात् । उर्वशी-गतमनसोऽपि तस्य काशिराजपुत्र्यां यद्यपि पूर्ववदेव बहुमान आसीत् तथापि प्रणिपातलंघनात्तेन तस्यां धैर्यमवलम्बितम् ।

अथ दिव्यपरिषदि अभिनयावसरे लक्ष्मीस्वयस्व-रस्याभिनयः समायोज्यत ।

**उद्घोषकः** : विदांकुर्वन्तु सुरेन्द्रप्रमुखाः समवेताः सर्वेऽपि देवाः लोकपालाश्च । अद्य भरतमुनिना मेनकोर्वश्यादिषु अप्सरस्सु नियुक्तोऽष्टरसाश्रयः प्रयोगो लक्ष्मीस्वयम्वरनामा श्रीमतां पुरतः प्रस्तूयते यस्यां वारुणी-भूमिकायां मेनका लक्ष्मीभूमिकायां च उर्वशी वर्तते । (स्वयंवरध्वनिप्रभावः)

**वारुणी** : सखि लक्ष्मि ! समागता एते त्रैलोक्यसुपुरुषाः सकेशवाश्च लोकपालाः । कतमस्मिंस्ते भावाभिनिवेशः ?

**लक्ष्मी** : सखि ! पुरूरवसि ।

**दर्शकः (१)** : अये उर्वश्याः वचनं प्रमादस्खलितम् जातम् !

**दर्शकः (२)** : ननु अन्यमनस्कैवेयमालक्ष्यते ?

**दर्शकः (३)** : कथमदृष्टपूर्वोऽश्रुतपूर्वश्च प्रमादः उर्वश्याः ?

**दर्शकः (१)** : नुन पश्यसि कथं सा लज्जावनतमुखी सञ्जाता ?

**दर्शकः (२)** : अये ! रुष्टो भरतमुनिस्तां किं वक्तुमागच्छति !

**भरतमुनिः** : उर्वशि ! येन ममोपदेशस्त्वया लंघितस्तेन न ते दिव्यं स्थानं भविष्यति ।

**दर्शकः (१)** : अहो ! अत्याचरितम् मुनिना । प्रथमे प्रमादस्खलिते इत्थं दारुणं शप्ता उर्वशी !

**दर्शकः (२)** : नुन सुरेन्द्रस्तां सान्त्वयतीव ।

**सुरेन्द्रः** : उर्वशि ! गतं मा शुचः । मुनेः शापं वररूपेण गृहाण । यस्मिस्त्वं बद्धभावासि तस्य मे रणसहायस्य राजर्षेः प्रियमत्र करणीयम् । तत्तावत्त्वं यथाकामं पुरूरवसमुपतिष्ठ यावत्सः त्वयि दृष्टसन्तानो भवेत् ।

**उर्वशी** : यथादिशति देवराजः । अनुगृहीतास्मि ।

वाचकः : उर्वशी स्वहृदयचौरस्य वसतिं प्रतिष्ठानपुरं प्रति प्रस्थिता। चित्रलेखा-द्वितीया सा रात्रौ राज्ञो 'मणिहर्म्यं' नाम प्रासादपृष्ठं समागता यत्र सवयस्यः पुरूरवाः उर्वशीं स्मरन् कालं यापयितुं यतते स्म। उर्वशी-चित्रलेखे तिरस्करिणीप्रभावादनवलोकनीये अश्रव्ये चास्ताम्, ते च सर्वमपि श्रोतुं द्रष्टुं च समर्थे आस्ताम्। तस्यामेव रात्रौ काशिराजपुत्री 'प्रियानुप्रसादनं' नाम व्रतमनुष्ठातुं तत्र समायाता—

राजा : किं नामधेयमेतद्देव्या व्रतम्? निपुणिके! त्वमेव ब्रूहि, देवी तव मुखमेवात्रेक्षते।

निपुणिका : भर्तुः प्रियानुप्रसादनं नाम।

देवी : दारिकाः! आनयतोपहारिकं यावन्मणिहर्म्यपृष्ठगतां-श्चन्द्रपादानर्चामि।

परिजनः : यद्भट्टिनी आज्ञापयति। एष गन्धकुसुमाद्युपहारः।

देवी : आर्यपुत्र! इतस्तावत्।

राजा : अयमस्मि।

देवी : एषाहं देवतामिथुनं रोहिणीमृगलाञ्छनं साक्षीकृत्यार्य-पुत्रमनुप्रसादयामि—अद्यप्रभृति यां स्त्रियमार्यपुत्रः प्रार्थयते या चार्यपुत्रस्य समागमप्रणयिनी तया सह मया प्रीतिबन्धेन वर्तितव्यम् इति।

चित्रलेखा : उर्वशि! महानुभावया पतिव्रतयाभ्यनुज्ञातः अनन्त-रायस्ते प्रियसमागमो भविष्यति।

देवी : यथानिर्दिष्टं संपादितं मया प्रियानुप्रसादनं नाम व्रतम्। दारिकाः! एत, गच्छामः।

राजा : प्रिये! न खलु प्रसादितोऽस्मि यदि संप्रति विहाय गम्यते।

देवी : आर्यपुत्र ! अलंघितपूर्वो मया नियमः ।
(सपरिवाराया राज्ञा निष्क्रमणसूचनम्)

देवी : सखि ! प्रियकलत्रो राजर्षिः । न पुनर्हृदयं निवर्तयितुं शक्नोमि ।

चित्रलेखा : किं पुनस्त्वया निराशया निवर्त्यते ?

राजा : वयस्य माणवक ! न खलु दूरं गता देवी ?

विदूषकः : भण विश्रब्धं यदसि वक्तुकामः । असाध्य इति वद्येनातुर इव स्वैरं मुक्तो भवांस्तत्रभवत्या ।

राजा : अपि नामोर्वशी—

उर्वशी : अद्य कृतार्था भवेत् !

राजा : गूढा नुपुरशब्दमात्रमपि मे कान्तं श्रुतौ पातयेत्
पश्चादेत्य शनैः कराम्बुजवृते कुर्वीत वा लोचने ।
हर्म्येऽस्मिन्नवतीर्य साध्वसवशान्मन्दायमना बलाद्
आनीयेत पदात्पदं चतुरया सख्या ममोपान्तिकम् ।

चित्रलेखा : सखि उर्वशि ! इमं तावदस्य मनोरथं सम्पादय । ननु गच्छ तिरस्करिणीमपनीय पृष्ठतो गत्वा राज्ञो नयने संवृणु । अहमपि तिरस्करिणीमपनीय विदूषकं संज्ञापयामि ।

विदूषकः : भो वयस्य ! का पुनरेषा ते लोचने संवृणोति ?

राजा : स्पर्शेन जानामि सखे ! नारायणोरुसंभवा सेयं वरोरुः ।

विदूषकः : कथं भवानवगच्छति ?

राजा : किमत्र ज्ञेयम् ? तां विहाय नान्या मेऽनङ्गक्लिष्टमङ्गं करस्पर्शात् सुखयेत् ?

विदूषकः : इयं तु हस्तौ अपनीय उत्थिता । स्वलोचनाभ्यां पश्य कास्तीयम् ?

उर्वशी : जयतु जयतु महाराजः ।

राजा : सुंदरि ! स्वागतम् ! एकासनं प्रतीक्षतेऽत्रभवतीम ।

चित्रलेखा : अपि सुखं वयस्यस्य ?

राजा : नन्वेतदुपपन्नम् !

उर्वशी : हला, देव्यां दत्तो महाराजः। अतोऽस्य प्रणयवतीव शरीरसम्पर्कं गतास्मि। मा खलु मां पुरोभागिनीं समर्थयस्व ।

विदूषकः : कथं इहैव युवयोरस्तमितः सूर्यः ?

राजा : उर्वशि

देव्या दत्त इति यदि व्यापारं व्रजसि मे शरीरेऽस्मिन् ।
प्रथमं कस्यानुमते चोरितमयि मे त्वया हृदयम् ?

चित्रलेखा : वयस्य ! निरुत्तरा एषा । साम्प्रतं मम विज्ञापना श्रूतयाम् ।

राजा : अवहितोऽस्मि ।

चित्रलेखा : वसन्तानन्तरमुष्णसमये भगवान्सूर्यो मयोपचरितव्यः। तद्यथेयं मे प्रियसखी स्वर्गाय नोत्कण्ठते तथा वयस्येन कर्त्तव्यम् ।

विदूषकः : किं वा स्वर्गे स्मर्तव्यम् । न वा तत्राश्यते न वा पीयते । केवलमनिमिषैर्मीना विडम्ब्यन्ते ।

राजा : भद्रे !

अनिर्देश्यसुखः स्वर्गः कस्तं विस्मारयिष्यति ।
अनन्यनारीसामान्यो दासस्त्वस्याः पुरूरवाः ।

चित्रलेखा : अनुगृहीतास्मि। हला उर्वशि, अकातरा भूत्वा विसर्जय माम् ।

उर्वशी : चित्रलेखे ! परिष्वज माम् । सखि मा खलु मां विस्मर ।

चित्रलेखा : (सस्मितम्) वयस्येन संङ्गता त्वमेवैतन्मया याचितव्या । वर्धताम् महाराजः !

विदूषकः : दिष्ट्या मनोरथसम्पत्या वर्धते भवान् ।

राजा : इयं तावदृद्धिर्मम ।

उर्वशी : नास्ति मे वाग्विभवोऽतः प्रियतरं मन्त्रयितुम् ।

विदूषकः : भोः सेविताः प्रदोषरमणीयाश्चन्द्रपादाः । समयः खलु ते वासगृहप्रवेशस्य ।

राजा : तेन हि सख्यास्ते मार्गमादेशय ।

विदूषकः : इत इतो भवती ।

(अवसादसंगीतम्)

सहजन्या : सखि चित्रलेखे ! किमेवं निर्विण्णेवासि ?

चित्रलेखा : सहजन्ये ! अप्सरोवारपर्यायेणेह भगवतः सूर्यस्य पादमूलोपस्थापनं वर्तते, इति बलवत् खलु उर्वश्यै उत्कण्ठितास्मि ।

सहजन्या : सखि ! जाने युवयोरन्योन्यस्नेहम् ! ततस्ततः ?

चित्रलेखा : ततः एतेसु दिवसेषु को नु खलु वृत्तान्तः इति प्रणिधानस्थितया मया अत्याहितमुपलब्धम् ।

सहजन्या : (सावेगं) कीदृशं तत् ?

चित्रलेखा : उर्वशी किल तं रतिसहायं राजर्षिम् अमात्येषु निवेशितराज्यधुरं गृहीत्वा, गन्धमादनवनं विहर्तुं गता ।

सहजन्या : स नाम समागमो यस्तादृशेषु प्रदेशेषु । ततस्ततः ?

चित्रलेखा : तत्र खलु मन्दाकिन्याः पुलिनेषु गता सिकतापर्वतकेलीभिः क्रीडन्ती विद्याधरदारिका उदयवती नाम तेन राजर्षिणा निध्यातेति कुपिता उर्वशी ।

सहजन्या : भवितव्यम् । दूरारूढः खलु प्रणयोऽसहनः । ततस्ततः ?

चित्रलेखा : ततः सा भर्तुरनुनयमप्रतिपद्यमाना गुरुशापसंमूढहृदया विस्मृतदेवतानियमा स्त्रीजनपरिहरणीयं कुमारवनं प्रविष्टा । प्रवेशानन्तरं च काननोपान्तवर्तिलताभावेन परिणतमस्या रूपम् ।

सहजन्या : अत्याहितम् । अथ किमवस्थः सः राजर्षिः ?

**चित्रलेखा** : सोऽपि तस्मिन्नेव कानने प्रियतमां विचिन्वन् अहोरात्रान् अतिवाहयति। एतेन पुनर्निर्वृतानामपि उत्कण्ठाकारिणा मेघोदयेनानर्थाधीनो भविष्यति।

(मेघध्वनिः)

**सहजन्या** : सखि! न खलु तादृशा आकृतिविशेषाश्चिरं दुःखभागिनो भवन्ति। तदवश्यं किमप्यनुग्रहनिमित्तं भूयोऽपि समागमकारणं भविष्यति। तदेहि उदयोन्मुखस्य भगवतः सूर्यस्योपस्थानं कुर्वः।

(६)

(मेघगर्जनध्वनिः)

**राजा** : उर्वशि! कुत्र गतासि? देहि मे प्रतिवचनम्। देहि मे प्रतिवचनम्। त्वं तु कदाप्येवं दीर्घं न कुपिता आसीः? उर्वशि! गन्धमादनपर्वतस्त्वां विना गन्धमादनो नास्ति। केन पथा गतासि? देहि मे प्रतिवचनम्। भो मयूर! हे कोकिल! हे हंस! हे चक्रवाक! भ्रमर! गजराज! किं भवता मम प्रियावलोकिता? (मयूरादीनां ध्वनयः)
गन्धमादन! कुत्रास्ति मे प्रिया? अहो मे दुर्भाग्यं! नदी, निर्झरः, अशोकः, कदम्बवृक्षः—कोऽपि मत्प्रियायाः संकेतं न ददाति। (साश्चर्यं) किं नु खलु एतच्छिलाभेदान्तर्गतं नितान्तरक्तमवलोक्यते? अये! रक्ताशोकप्रसवसमरागो मणिरयम्? अहो! अयं हरति मे मनः। भवतु, आदास्ये तावदेनम्। अथवा प्रियाविरहे किमेतेन करोमि?

**ध्वनिः** : वत्स! गृह्यतां गृह्यताम्! अयं संगमनीयसंज्ञको मणिरस्ति। शैलसुताचरणरागसम्भूतोऽयं धार्यमाणोऽचिरात् प्रियजनेन संगममावहति।

**राजा** : को नु मामेवमनुशास्ति! अये अनुकम्पते मां

कश्चिन्मृगचारी मुनिर्भगवान्। भगवन्! अनुगृहीतोऽस्मि भवदुपदेशात्। हं हो संगमनीय! यदि मां प्रियया संगमयसि तदा त्वामात्मनः शिखामणिं करिष्यामि। (लताकुञ्जध्वनिप्रभावः)

अये! किं नु कुसुमरहितामपि लतामिमां पश्यतो मे मनो रमते। अथवा स्थाने मनोरमा ममेयम्। इयं हि तन्वी जातानुतापा उर्वशीव तिष्ठति। यावदस्यां प्रियानुकारिण्यां परिष्वंगप्रणयी भवामि। अये उर्वशीगात्रसंस्पर्शादिव निर्वृतं मे शरीरम्। कथं सत्यमेव प्रियतमा? उर्वशि! (मूर्च्छति)

**उर्वशी** : अत्याहितम्! मूर्च्छितो महाराजः। समाश्वसितु समाश्वसितु महाराजः।

**राजा** : प्रिये अद्य जीवितम्! गतासुना मया चेतनेव त्वमुपलब्धा।

**उर्वशी** : अभ्यन्तरकरणया मया प्रत्यक्षीकृतवृत्तान्तः खलु महाराजः। प्रसीदतु महाराजो यन्मया कोपवशं गतया एतदवस्थान्तरं प्रापितो महाराजः। गुरुशापसंमूढहृदयाहं कुमारवनं प्रविश्य लताभावं प्राप्ता। अस्य पुनः संगमनीयमणेरनुग्रहेण प्रकृतिस्थास्मि संवृत्ता। एनं मणिं मूर्ध्नि वहामि।

**राजा** : श्रियमुद्वहति ते मुखमनेन मणिना! सुन्दरि! क्षणमात्रमेवमेव स्थीयताम्।

**उर्वशी** : प्रियंवद! महान् खलु कालस्तव प्रतिष्ठानान्निर्गतस्य। कदाचिदसूयिष्यन्ति मह्यं ते प्रजाः। तदेहि निवर्तावहे।

**राजा** : यदाह भवती। मेघविमानेन प्रतिष्ठानपुरं प्रतिष्ठावहे।

(विमानध्वनिप्रभावः)

(७)

**विदूषकः** : (सहर्षं) ही ही भोः। दिष्ट्या चिरस्य कालस्योर्वशीसहायो नन्दनवनप्रमुखेषु देवतारण्येषु विहृत्य

प्रतिवृत्तः प्रियवयस्यः। प्रविश्य नगरमिदानीं ससत्कारोपचारैः प्रकृतिभिरनुरज्यमानो राज्यं करोति। सन्तानवत्त्वं वर्जयित्वा न किमप्यस्य हीनम्। अद्य तिथिविशेष इति भगवत्योर्गंगायमुनयोः संगमे देवीभिः सह कृताभिषेकः साम्प्रतमुपकार्यां प्रविष्टः। तद्यावत्तत्रभवतोऽलंक्रियमाणस्यानुलेपमाल्येऽग्रगामी भवामि।

ध्वनिः : हा धिक्! हा धिक्! दुकूलोत्तरच्छदे तालवृन्ताधारे निक्षिप्य नीयमानो मया भर्तुरभ्यन्तरविलासिनीमौलिरत्नयोग्यो मणिरामिषशंकिना गृध्रेणाक्षिप्तः।

विदूषकः : अत्याहितम्। अत्याहितम्। परमबहुमतः खलु स वयस्यस्य संगमनीयो नाम चूडामणिः। अतः खल्वसमाप्तनेपथ्य एव तत्रभवान् आसनादुत्थायेत आगच्छति। यावत्वदेनमुपसर्पामि।

(सावेगपरिजनस्य राज्ञः प्रवेशसूचनम्)

राजा : वेधक वेधक! आत्मनो वधमाहर्ता क्वासौ मणितस्करो विहगः?

किरातः : एष एष खलु मुखकोटिलग्ननेन सूत्रेण मणिनालिखन्निवाकाशं परिभ्रमति।

राजा : पश्याम्येनम्! किं नु खल्वत्र कर्तव्यम्?

विदूषकः : (उपेत्य) भोः! अलमत्र दयया! अपराधी शासनीयः।

राजा : सम्यगाह भवान्। यवनि! धनुर्धनुस्तावत्!

यवनी : एषानेष्यामि (निष्क्रमणसूचनम्)।

राजा : वयस्य न दृश्यते स विहगाधमः! क्व नु खलु गतः?

विदूषकः : भोः इतो दक्षिणान्तेनापगतः स शासनीयः कुणपभोजनः।

राजा : दृष्ट इदानीम्!

यवनी : भर्तः! एतद् हस्तावापसहितं शरासनम्।

राजा : किमिदानीं शरासनेन? बाणपथमतीतः स क्रव्यभोजनः! आर्य लातव्य!

कंचुकी : आज्ञापयतु देवः ।

राजा : मद्वचनादुच्यतां नागरिकः । सायं निवासवृक्षाश्रयी विचीयतां स विहगदस्युरिति ।

कंचुकी : यदाज्ञापयति देवः । (निष्क्रान्तः)

(कोलाहलः 'अये ! गगनान्मणिसहितो गृध्रः पतति' इति)

(प्रविश्य) जयतु जयतु देवः ! अनेन बाणेन निर्भिन्नतनुः संगमनीयमणिसहितो गृध्रः अन्तरिक्षात्पतितः ! अयमद्भिः प्रक्षालितो मणिः । कस्मै दीयताम्, आज्ञापयतु ।

राजा : आश्चर्यम् ! वेधक ! गच्छ अग्निशुद्धमेनं कृत्वा पेटकं प्रवेशय ।

किरातः : यद् भर्ता आज्ञापयति । (निष्क्रान्तः)

राजा : आर्य लातव्य ! जानीते भवान् कस्यायं बाण इति ।

कंचुकी : नामांकितोऽयं दृश्यते। न तु मे वर्णविचारक्षमा दृष्टिः ।

राजा : तेन हि उपनय शरं, यावदहं निरूपयामि ।

कंचुकी : गृह्यताम् देवोऽयं बाणः !

राजा : किमंकितम् ? हुं !

उर्वशीसंभवस्यायमैलसूनोर्धनुष्मतः ।
कुमारस्यायुषो बाणः प्रहर्तुर्द्विषदायुषाम् ।।

विदूषकः : दिष्ट्या सन्तानेन वर्धते भवान् !

राजा : सखे ! कथमेतत् ? अन्यत्र नैमिषयसत्रादवियुक्तोऽहमुर्वश्या । न च मया कदाचिदपि गर्भव्यक्तिरालक्षिता कुत एव प्रसूतिः ।

कंचुकी : (प्रविश्य) जयतु जयतु देवः ! देव च्यवनाश्रमात् कुमारं गृहीत्वा सम्प्राप्ता तापसी देवं द्रष्टुमिच्छति ।

राजा : उभयमप्यविलम्बं प्रवेशय !

कंचुकी : यथाज्ञापयति देवः । (निष्क्रम्य प्रविश्य च) इत इतो भगवती ! भगवती एवं स्थीयताम्, अयं महाराजः !

राजा : अम्ब ! अभिवादये !

तापसी : महाभाग ! सोमवंशविस्तारयिता भव !

राजा : भगवति । आज्ञापयतु, किमागमनप्रयोजनम् ?

तापसी : शृणोतु महाराजः । एष दीर्घायुर्जातमात्र एव उर्वश्या किमपि निमित्तमवेक्ष्य मम हस्ते न्यासीकृतः । यत् क्षत्रियकुमारस्य जातकर्मादिविधानं तदस्य भगवता च्यवनेनाशेषमनुष्ठितम् । गृहीतविद्यो धनुर्वेदे भिविनीतः ।

राजा : सनाथः खलु संवृत्तः ।

तापसी : अद्य पुष्पसमित्कुशानिमित्तं ऋषिकुमारकैः सह गतेनानेनाश्रमविरुद्धमाचरितम् ।

विदूषकः : किमिव ?

तापसी : गृहीतामिषः किल गृध्रः पादपशिखरे निलीयमानोऽनेन लक्ष्यीकृतो बाणस्य ।

राजा : ततस्ततः ?

तापसी : तत उपलब्धवृत्तान्तेन भगवता च्यवनेनाहं समादिष्टा-'निर्यातयैनमुर्वशीहस्ते न्यासमिति' । तदिच्छामि देवीमुर्वशीं प्रेक्षितुम् ।

राजा : तेन ह्यासनमनुगृह्णातु भगवती । आर्य लातव्य ! आहूयतामुर्वशी !

कंचुकी : यदाज्ञापयति देवः ।

राजा : एहि वत्स !

तापसी : जात ! नन्दय पितरम् ।

कुमारः : तात ! वन्दे ।

राजा : वत्स ! चिरंजीव !

कंचुकी : इत इतो देवी !

उर्वशी : को नु खल्वेष सबाणासनः पादपीठं स्वयं महाराजेन संयम्यमानशिखण्डकस्तिष्ठति? अहो सत्यवतीसूचितोऽयं मे पुत्रक आयुः । महान् खलु संवृत्तः ।

राजा : वत्स ! इयं ते जननी ।

तापसी : जात ! एहि । प्रत्युद्गच्छ मातरम् ।

उर्वशी : अम्ब ! पादवन्दनं करोमि !
तापसी : वत्से ! भर्तुर्बहुमता भव ।
कुमारः : अम्ब अभिवादये ।
उर्वशी : वत्स ! पितरमाराधयिता भव । जयतु जयतु महाराजः ।
राजा : स्वागतं पुत्रवत्यै ! इत आस्यताम् ।
तापसी : वत्से !एष गृहीतविद्य आयुः साम्प्रतं कवचहरः संवृत्तः । तदेतस्य ते भर्तुः समक्षं निर्यातितो हस्तनिक्षेपः । तद्विसर्जयितुमिच्छामि । उपरुध्यते ममाश्रमधर्मः ।
उर्वशी : चिरस्यार्यां दृष्ट्वाधिकतरमवितृष्णास्मि । न शक्नोमि विस्रष्टुम् । अन्याय्यं पुनरुपरोद्धुम् । तद् गच्छत्वार्या पुनर्दर्शनाय ।
राजा : अम्ब ! भगवते च्यवनाय मां प्रणिपातय ।
तापसी : एवं भवतु ।
कुमारः : आर्ये ! सत्यं यदि निवर्तसे मामप्याश्रमं नेतुमर्हसि ।
राजा : अयि वत्स ! उषितं त्वया पूर्वस्मिन्नाश्रमे ! द्वितीयमध्यासितुं तव समयः ।
तापसी : जात ! गुरोर्वचनमनुतिष्ठ !
कुमारः : तेन हि मे मित्रं मणिकण्ठकं शिखिनमत्र प्रेषयत्वत्रभवती ।
तापसी : एवं करोमि ।
उर्वशी : भगवति ! पादवन्दनं करोमि !
राजा : भगवतीं प्रणमामि ।
तापसी : स्वस्ति भवतु युष्मभ्यम् । (तापस्य निष्क्रमणसूचनम्)
राजा : कल्याणि !

अद्याहं पुत्रिणामग्र्यः सत्पुत्रेणामुना तव ।
पौलोमीसंभवेनैव जयन्तेन पुरन्दरः ॥

उर्वशी : (रोदिति)

राजा : उर्वशि ! प्रमोदसमये कथं रोदिषि ?

उर्वशी : शृणोतु महाराजः। प्रथमं पुनः पुत्रदर्शनसमुत्थेनानन्देन विस्मृतास्मि। इदानीं महेन्द्रसंकीर्तनेन स्मृतः समयो मम हृदयमायासयति।

राजा : कथ्यतां समयः !

उर्वशी : अहं पुरा महाराजगृहीतहृदया गुरुशापसंमूढा महेन्द्रेण आज्ञापिता।

राजा : किमिति ?

उर्वशी : "यदा स मे प्रियसखो राजर्षिस्त्वयि समुत्पन्नस्य वंशकरस्य मुखं प्रेक्षिष्यते तदा त्वया भूयोऽपि मम समीपमागन्तव्यम्" इति। ततो मया महाराजवियोगभीरुतया जातमात्र एव विद्यागमनिमित्तं भगवतश्च्यवनस्याश्रम एष पुत्रक आर्यायाः सत्यवत्या हस्ते प्रकाशं निक्षिप्तः। अद्य पितुराराधनसमर्थः संवृत्त इति कलयन्त्या तया निर्यातित एव मे दीर्घायुरायुः। तदेतावान्मे महाराजेन सह संवासः।

राजा : ओः। वज्रताडितोऽस्मि ! उर्वशि, परवशासि ! गच्छ भर्तुः शासने तिष्ठ ! अहमपि तव सूनौ राज्यभारं विन्यस्य तपोवनमाश्रयिष्ये !

कुमारः : नार्हसि तात ! पुंगवधारितायां धुरि दम्यं नियोजयितुम् !

राजा : अयि वत्स ! मा मैवम् ! स्वकार्यभारं सोढुं समर्थोऽसि ! आर्य लातव्य !

कंचुकी : आज्ञापयतु देवः।

राजा : मद्वचनादमात्यपरिषदं ब्रूहि संभ्रियताम् आयुषो राज्याभिषेक इति।

कंचुकी : यथा आज्ञापयति देवः (दुःखितो निष्क्रान्तः)

विदूषकः : वयस्य ! किं नु खल्वेतद् गगने चाकचिक्यं रचयति ?

राजा : सत्यमेव ? किं नु खलु निरभ्रे विद्युत्संपातः ?
उर्वशी : अहो ! भगवान् नारदः !
राजा : भगवन् ! अभिवादये । किमागमनप्रयोजनम् ?
नारद : राजन् ! श्रूयतां महेन्द्रसन्देशः ।
राजा : अवहितोऽस्मि ।
नारदः : प्रभावदर्शी मघवा वनगमनाय कृतबुद्धिं भवन्तमनुशास्ति ।
राजा : किमाज्ञापयति ?
नारदः : त्रिकालदर्शिभिर्मुनिभिरादिष्टो महान् सुरासुरसंगरो भावी । भवांश्च सांयुगीनः सहायो नः । तेन न त्वया शस्त्रं संन्यस्तव्यम् । इयं चोर्वशी यावदायुस्तव सहधर्मचारिणी भवत्विति ।
उर्वशी : अहो ! शल्यमिव मे हृदयादपनीतम् ।
राजा : परवानस्मि देवेश्वरेण ।
नारदः : युक्तम् त्वत्कार्यं वासवः कुर्यात्त्वं च तस्येष्टमाचरेः ।
सूर्यः समेधयत्यग्निम् अग्निः सूर्यं च तेजसा ।।
(आकाशावलोकनं सूचयित्वा) रम्भे ! उपनीयतां स्वयं महेन्द्रेण संभृतः कुमारस्यायुषो यौवराज्याभिषेकः ।
अप्सरसः : भगवन् ! एतेऽभिषेकसम्भाराः !
वैतालिकौ : विजयतां युवराजः !
नारदः : भो राजन् ! किं ते भूयः प्रियमुपकरोतु पाकशासनः ?
राजा : यदि मे मघवा प्रसन्नः, किमतः परमिच्छामि ? तथापीदमस्तु—
परस्परविरोधिन्योरेकसंश्रयदुर्लभम् ।
संगतं श्रीसरस्वत्योर्भूतयेऽस्तु सदा सताम् ।।
अपि च
सर्वस्तरतु दुर्गाणि सर्वो भद्राणि पश्यतु ।
सर्वः कामानवाप्नोतु सर्वः सर्वत्र नन्दतु ।।

(हर्षसंगीतम्)

o

# पात्राणि

**पुरुषपात्राणि**

सूत्रधारः
भरतः
शत्रुघ्नः
हनूमान
रामः
लक्ष्मणः
सुग्रीवः
विभीषणः
ब्रह्मादिदेवाः
भरद्वाजः
वसिष्ठः
उद्घोषकः
विरुदावलीपाठकर्ता
वानरवीराः

**स्त्रीपात्राणि**

नटी
सीता
तारा
स्नापयित्री
अलंकर्त्री

रमाकान्तशुक्ल-कृतम्

ध्वनिनाटकम्

# आलोकिनी

**मर्यादापुरुषोत्तम-राघवचारित्र्य-सम्पूयूता ।**
**त्रिभुवनातिलकोभूता धन्यायोध्यापुरी जयति ॥**

(नान्द्यन्ते)

**सूत्रधारः** : नमः साकेतपुर्यै !

**नटी** : नमो रामवतारधरण्यै अयोध्यायै !

**सूत्रधारः** : अद्य दीपमालिकया आलोकिता अयोध्या अतितरां राजते, अनुस्मारयति च श्रीरामचन्द्रस्य वनवासादनन्तरं स्वागतमहोत्सवम् ।

**नटी** : भरतस्य कृते तु स महोत्सवः अत्यन्तमेव आनन्दप्रद आसीत् ।

**सूत्रधारः** : नूनम् ! अतः पूर्वं तु शासनसञ्चालकानाम् आदर्शभूतेन भरतेन कृच्छ्रं तपः समाचरितम् ।

**नटी** : नन्दिग्रामे तपस्विनां दिनचर्याम् अंगीकुर्वता तेन शासनं सञ्चालितम् ।

**सूत्रधारः** : प्रिये ! अहं तु भगवता वाल्मीकिना रामायणे वर्णितां भरतस्य दशामनुस्मृत्य रोमाञ्चितो भवामि । अस्मिन् क्षणेऽहं भावनया—

**पश्यामि भरतं दीनं कृशमाश्रमवासिनम् ।**
**क्रोशमात्रे त्वयोध्यायाश्चीरकृष्णाजिनाम्बरम् ॥**

जटिलं मलदिग्धांगं भ्रातृव्यसनकर्षितम् ।
फलमूलाशिनं दान्तं तापसं धर्मचारिणम् ॥
समुन्नतजटाभारं वल्कलाजिनवाससम् ॥
नियतं भावितात्मानं ब्रह्मर्षिसमतेजसम् ॥
पादुके तु पुरस्कृत्य प्रशासन्तं वसुन्धराम् ।
चातुर्वर्ण्यस्य लोकस्य त्रातारं सर्वतो भयात् ॥

(स्थानम्: नन्दिग्रामः)

**भरतः** : भ्रातः शत्रुघ्न ! अपि कुशलं प्रजायाः ? प्रजाजनैः किञ्चित् कष्टं तु नानुभूयते ?

**शत्रुघ्नः** : नैव तात ! सर्वेऽपि प्रजाजनाः श्रमपराः, सुखिनोऽतन्द्रिताश्च सन्ति ।

**भरतः** : भ्रातः शत्रुघ्न ! अग्रजस्य श्रीरामचन्द्रमहाभागस्य वनवासावधिः अद्य पूर्यते । तेनोक्तमासीत् अवधिसमाप्तेरव्यवहितोत्तरं सोऽस्मान् द्रक्ष्यतीति । किन्तु तस्य कापि प्रवृत्तिर्न ज्ञाता ! कुत्र नु आर्येण भाव्यम् ? लक्ष्मण-शक्तेरनन्तरं किं वृत्तम्-इत्यपि न ज्ञातम् ।

**शत्रुघ्नः** : आर्य ! यथा मे प्रत्ययस्तेन लंकाधिराजः पराजितः स्यात् ! तेनावश्यमेव श्वोऽत्रागन्तव्यं भवेत् ।

**भरतः** : शृणु भ्रातः ! यदि श्वोऽहं श्रीरामं न पश्यामि तदा मे जीवनस्याशां त्यज । ततः परमायुष्मतैव राज्यसञ्चालनं कार्यम् । आगते श्रीरामे तस्मै राज्यम् प्रत्यर्पणीयम् ।

**शत्रुघ्नः** : भ्रातः ! किमेतदुच्यते भवता ? भवान् महाराजश्रीरामचन्द्रस्य प्रतिनिधिर्भरतः । तस्य राज्यं तस्मै भवतैव प्रत्यर्पणीयम् । नाहं तत्सञ्चालयितुमर्हामि ।

भरतः : आयुष्मन् शत्रुघ्न ! यदहं वाच्मि तत्परमार्थतो गृहाण! यद्यार्यः श्व आगमिष्यति तर्हि शुभमेव। यदि कथञ्चित्तमहं श्वो न पश्यामि तर्हि मया जीवितं नैव धारयिष्यते—इति मे दृढो निश्चयः। अतो भवान् राज्यस्य विषये मत्तः सर्वमप्यवधारयतु। विना श्रीरामं जीवतं किन्निमित्तकम् ? अद्यपर्यन्तं श्रीरामस्य पादुके पुरस्कृत्य मया तद्राज्यं सञ्चालितम्। अवधेरनन्तरं मया तत्कर्तुं न पारयिष्यते।

शत्रुघ्नः : आर्य ! किमेतच्चिन्त्यते भवता ! भ्रातृजायया भ्रात्रा लक्ष्मणेन च सहितः सत्यसन्ध आर्यः। श्रीरामचन्द्रोऽवश्यमेव श्व आगमिष्यति।

हनूमान् : (प्रविशन्)

अवश्यमेवागमिष्यति !

शत्रुघ्नः : अये ! कोऽसावदृष्टपूर्वः विप्र इव प्राञ्जलिरायाति ?

हनूमान् : अयमहं सर्वमेव निवेदयामि। देव भरत! यं चीरजटाधरं दण्डकारण्ये वसन्तं काकुत्स्थं भवान् श्रीराममनुशोचति स भवन्तं कुशलं ब्रूते। भवतः प्रियमाख्यामि देव! शोकं त्यजतु भवान्! शीघ्रमेव भवान् स्वभ्रात्रा रामेण सह संगतः स्यात्। श्रीरामो रावणं निहत्य मैथिलीं च प्रतिलभ्य समृद्धार्थः सन् महाबलैर्मित्रैः सह उपयाति। महातेजा लक्ष्मणस्तथा यशस्विनी वैदेही सीता तेन सहैव आगच्छतः।

भरतः : अहो ! श्रीराम आगच्छति। श्रीराम ! (मूर्च्छति)

हनूमान् : अये ! श्रीभरतोः हर्षातिरेकात् मन्ये मोहमुपागतः। आर्य शत्रुघ्न ! जलं तावत्।

शत्रुघ्नः : इदं जलम्। उपस्पृशामि। दिष्ट्या चैतन्यमाप्तो मे भ्राता। किन्तु को भवान् ? कुतो भवान् !

भरतः : (चेतनःसन्) यो वा यतो वा शत्रुघ्न ! अयं मे प्रियकरः इति मे मनो मनुते । (हनूमन्तं प्रति) तथापि भद्र ! स्वपरिचयेनास्मान् सुखीकुरु । सौम्य ! अनुक्रोशादिहागतो कश्चिद् देवोऽसि मानुषो वा ? प्रियाख्यानस्य ब्रुवतस्ते किं प्रियं ददामि ?

हनूमान् : आर्य भरत ! भवतां दर्शनात् प्रियतरं किं नु भवेत् ? भवान् दृष्टः, सर्वं लब्धम् !

भरतः : विप्रवर ! भवतो वाणी श्रुतपूर्वेवालक्ष्यते । किमावां कदाचिन्मिलितौ ?

हनूमान् : सत्यमाह अत्रभवान् ! ननु स्मरति भवान् द्रोणगिरितः सञ्जीवनीमाहरन्नहं यदा भवताकाशान्निपातितः ! स एवाहम्——

भरतः : अये ! कपिवरो हनूमान् ! एह्येहि मित्र ! गाढं परिष्वजस्व । विप्रवेशेऽपि महानुभावः प्रतीयसे ? बलनिधान ! कुत इदानीमागम्यते ? कुत्र मे भ्राता श्रीरामः ? कुत्र मे भ्रातृजाया जानकी ? कुत्र मेऽनुजो लक्ष्मणः ?स्वत्वरं ब्रूहि ।

हनूमान् : सर्वं भणामि । सञ्जीवन्याहरणकाले तु शीघ्रतायां विस्तरशो वार्ता नैव भवितुमशकत् । इदानीं तु विद्यतेऽवकाशः ।

भरतः । मित्र ! प्रथममेतत्तु भण श्रीरामः कुत्रास्ते इति ? तदनु विस्तरशः किमपि आख्याहि !

हनूमान् : एतदेवाख्यातुमहमीहे श्रीरामः कुत्र तिष्ठतीति ! शृणोतु अवहितो भवान् ।

भरतः : अवहितोऽस्मि !

हनूमान् : एतत्तु विदितमेव भवतो यथा श्रीरामः प्रव्रजितः, यथा भवतो मात्रे द्वौ वरौ प्रदाय राजा दशरथः पुत्रशोकेन प्राणांस्तत्याज !

भरतः : एतदेव मे दौर्भाग्यस्य दुष्प्रारम्भो यो ममानुपस्थितौ संवृत्तः ।

हनूमान् : एतदपि भवान् जानात्येव यत् दूतैर्भवान् राजगृहात् तूर्णमानीतः। अयोध्यायां प्रविष्टेन भवता राज्यं नेप्सितम् । सतां धर्ममाचरता भवता चित्रकूटगिरिं गत्वा यथा राज्येन श्रीरामो निमन्त्रितः यथा च राज्ञो वचने स्थितेन श्रीरामेण राज्यं विसर्जितम् यथा च आर्यस्य पादुके गृहीत्वा भवान् पुनरयोध्यां प्राप्तः— सर्वमेतद् भवतो विदितमेव !

भरतः : मित्र ! एतत्तु विदितमेव मे। मयि चित्रकूटात् प्रतिप्रयाते सति तत्र किमभवत् इति सम्यगहं न जानामि ?

हनूमान् : तदेव भणामि । भवति प्रत्यागते तद्वनं समुद्भ्रान्त-मृगद्विजं तथा परिद्यूनमिव समपद्यत । ततः श्रीरामो विजनं दण्डकवनं प्रविवेश ।

भरतः : अहो ! मत्कृते आर्येण किं किं सोढम् ? दण्डकवने किं संवृत्तम् ।

हनूमान् : तत्र गहने वने गच्छतां श्रीरामसीतालक्ष्मणानां पुरस्तात् महानादं विनदन् विराधः प्रत्यदृश्यत ।

भरतः : ततः ?

हनूमान : ततः कुञ्जरमिव नदन्तं तं विराधं ते त्रयोऽपि निखाते प्राक्षिपन् ।

भरतः : ततः ?

हनूमान : ततस्ते शरभंगमुनेराश्रमं गताः। शरभंगे दिवं याते सत्यपराक्रमः श्रीरामः सर्वान् मुनीन् अभिवाद्य जनस्थानमुपागमत् ।

भरतः : जनस्थाने किं किं संवृत्तम् ?

हनूमान् : जनस्थाने राम-रावणयुद्धबीजम् उप्तम् ।

भरतः : कथमेतत् ?

हनूमान् : लंकाधिराजरावणस्य भगिनी शूर्पणखा रामस्य पार्श्वमागत्य अनुचितं प्रस्तावमकरोत्। रामेण सन्दिष्टो लक्ष्मणस्तां विरूपिणीमकरोत् !

भरतः : ततः ?

हनूमान् : ततो विरूपिता सा शूर्पणखा रक्षसां चतुर्दशसहस्राणि आनीतवती।

भरतः : ततः ?

हनूमान् : ततः एकाकिना श्रीरामेण ते सर्वेऽपि तपसो विघ्नकारिणो महाबलाः दण्डकारण्यनिवासिनो राक्षसा युद्धे निहताः।

भरतः : अनुरूपं काकुत्स्थस्येदम् ! ततः ?

हनूमान् : ततो राक्षसेषु विनिष्पिष्टेषु रणे श्रीरामेण खरो निहतः, तदनु दूषणस्तदनन्तरं च त्रिशिरा हतः। एतेन वृत्तेनार्दिता सा शूर्पणखा रावणं समुपागच्छत्।

भरतः : ततः ?

हनूमान् : रावणेनाज्ञप्तस्तदनुचरो मारीचो नाम राक्षसः रत्नमयो मृगो भूत्वा वैदेहीं लोभयामास।

भरतः : तदा किमभवत् !

हनूमान् : तदा वैदेही रामं तं मृगं ग्रहीतुं प्रार्थयामास।

भरतः : ततः ?

हनूमान् : ततो धनुष्पाणी रामस्तं मृगमनुधावत्। धावन्तं च तं मृगं शरेण जघान। लक्ष्मणोऽपि श्रीराममन्वगच्छत्। अत्रान्तरे रावणः आश्रमं प्रविवेश, सीतां च हृत्वा आकाशमार्गेण लंकां प्रति प्रस्थितः।

भरतः : हा कष्टम् ! मातः कैकेयि ! एतानि सुखानि भोजयितुं त्वया श्रीरामो वने गमितः !

हनूमान् : आर्य भरत ! नात्र माता कैकेयी उपालब्धव्या। अवश्यं भाविनो भावाः सर्वेषामपि भवन्त्येव ! अस्तु प्रकृतमनुसरामः। अवहितेन श्रूयताम्—

भरतः : अवहितोऽस्मि ।

हनूमान् : यदा सीतां गृहीत्वा रावणः आकाशमार्गेण गच्छति स्म तदा जटायुना गृध्रराजेन स आक्रान्तः । स राक्षसस्तं खड्गेन पक्षविहीनं कृत्वा लंकां ययौ । अत्रान्तरे रामलक्ष्मणौ मृगं हत्वा आश्रमं प्रत्यागतौ । तत्र च जानकीमदृष्ट्वा अत्यन्तं चिन्तां व्यथां च समापन्नौ । सीतां मार्गमाणौ तौ जटायुं ददर्शतुः । जटायू रावणेन सीताया हरणं रामाय निवेद्य परलोकं गतः ।

अथ लक्ष्मणेन सह राघवः सीतां मार्गमाणः गोदावरीमनुचरन् वदोद्देशम् प्रापत् । महारण्ये कबन्धं नाम राक्षसं समुद्धृत्य स ऋष्यमूकगिरिं गतः । तत्रैव तेन सहास्माकं परिचयो जातः । पूर्वोक्तं समस्तवृत्तं श्रीरामलक्ष्मणाभ्यां सह वार्ताप्रसंगेनास्माभिर्ज्ञातम् । अतः परं तु यदपि वृत्तं तस्य साक्षाद् द्रष्टाऽहमस्मि ।

भरतः : किं किं तत् ?

हनूमान् : अस्माकं राजा सुग्रीवेण साकं रामस्य मैत्री जाता । रामेण वालिनं निहत्य सुग्रीवो राज्ये स्थापितः । वानरेन्द्रेण सुग्रीवेण देव्या जानक्या मार्गणाय दशकोटिमिता वानराः सर्वासु दिक्षु प्रस्थापिताः । तेषामेवान्यतमोऽयं जनोऽस्ति ।

भरतः : तर्हि वानरैरन्विष्टा आर्या जानकी ?

हनूमान् : तस्य मार्गणं सुकरं आसीत् । वयं विन्ध्यपर्वतगुहायां प्रविष्टाः, इति हेतोः अस्माकं महान् कालोऽत्यवर्तत ।

भरतः : तर्हि ?

हनूमान् : तर्हि गृध्रराजजटायोर्भ्राता सम्पातिः अस्मभ्यं सूचनां ददौ, सीता रावणस्य लंकायां निवसतीति ।

एतच्छ्रुत्वाऽहं दुःखपरीतानां ज्ञातिनां दुःखं नुदन् आत्मवीर्यं समास्थाय समुद्रं लंघयित्वा लंकां गतः।

भरतः : अहो भवतः पराक्रमः ! लंकायां किं वृत्तम् ?

हनूमान् : लंकायां रावणानुजेन विभीषणेन साकं मम परिचयो जातः। तेन मह्यं सूचना दत्ता जानकी अशोकवाटिकामधितिष्ठतीति। अहं तत्र गत्वा कौशेयवसनां मलिनां निरानन्दां दृढव्रतां जानकीमद्राक्षम्। तया साकं सम्भाषणं कृत्वा तस्यै रामनामांकितमंगुलीयकम् अभिज्ञानस्वरूपं प्रदत्तवान्। मां रामदूतं ज्ञात्वा सीता हर्षं जगाम। तस्याः संदिष्टं तथा अभिज्ञानरूपं चूडामणिम् लब्ध्वा कृतार्थः सन्नहमागतः।

भरतः : ततः ?

हनूमान् : ततो मया रामाय सोऽभिज्ञानमणिः सर्मपितः, जानक्याः सन्दिष्टं च निवेदितम्। श्रीरामे उत्साहः संचचार। स उद्योगमुद्योजयिष्यन् लंकानाशे मनो दधार। ततः स समुद्रमासाद्य नलं सेतुमकारयत्। तेन सेतुना कपिवीराणां वाहिनी अतरत्।

रावणेन निरादृतो निरस्तश्च तदनुजो विभीषणः श्रीरामं शरणमाययौ।

अथ प्रवृत्तम् राम-रावणयोर्युद्धम्, यत्र प्रहस्त नीलः कुम्भकर्णं राघवः, मेघनादं लक्ष्मणः रावणं च स्वयं श्रीरामोऽवधत्।

भरतः : सदृशं खल्वेतद्रघुकुलललामस्य !

हनूमान : ततो जितकाशिनः संहृष्टा वानरा राघवस्य जयं रावणस्य वधं वदन्तो विनेदुः —

(पूर्वदीप्ति (फ्लैशबैक)-पद्धत्या)

**वानरः** १—दशकण्ठहर्ता राघवो

**अपरे** २—विजयतेतराम् !

वानरः १—दशग्रीवान्तकः श्रीरामो
अपरे २—विजयतेतराम्
वानरः १—मर्यादापुरुषोत्तमः श्रीरामचन्द्रो
अपरे २—विजयतेतराम्

अन्तरिक्षे देवदुन्दुभयो व्यनदन्—(दुन्दुभि-ध्वनिः) अन्तरिक्षात् मनोहरा पुष्पवृष्टिर्निपपात। अथ भ्रातृमरणदुःखितं विभीषणं सान्त्वयन् श्रीराम उवाच—

(पूर्वदीप्तिः)

**श्रीराम** : विभीषण! वैराणि मरणान्तानि भवन्ति। अस्माकं प्रयोजनं निवृत्तम्। आहिताग्निः महातपाः वेदान्तगः कर्मशूरश्च दशाननो यथा तव भ्राता तथैवेदानीं ममाप्यस्ति। अस्यान्तिमः संस्कारो यथाविधि क्रियताम्।

संवृत्ते तत्संस्कारे श्रीरामः सत्त्वसम्पन्नं दीप्ततेजसं सौमित्रिम् उवाच—

(पूर्वदीप्तिः)

**रामः** : सौम्य लक्ष्मण!

**लक्ष्मणः** : आज्ञापयतु आर्यः।

**रामः** : सौमित्रे! अस्माकमनुरक्तं तथा पूर्वोपकारिणमिमं विभीषणं लंकायामभिषेचय। एष मे परमः कामोऽस्ति, इमं रावणानुजं लंकायामभिषिक्तं पश्येयमिति।

**लक्ष्मणः** : यथाज्ञापयति भवान्।

विभीषणो लंकाधिराजः संवृत्तः। सत्यसन्धः श्रीरामः परमां प्रीतिं जगाम। मया च रामाज्ञया विभीषणानुज्ञया च वैदेही सीता अखिलवृत्तेन परिचिता कृता

श्रीरामसमीपं च प्रापिता। अस्मिन्नेवावसरे ब्रह्मा, महेश्वरः इन्द्रादयो देवाश्च तत्रागत्य श्रीरामं तुष्टुवुः—

(पूर्वदीप्तिः)

**देवाः** वन्दे देवं विष्णुमशेषस्थितिहेतुं
त्वामध्यात्मज्ञानिभिरन्तर्हृदि भाव्यम्।
हेयाहेयद्वन्द्वविहीनं परमेकं
सत्तामात्रं सर्वहृदिस्थं दृशिरूपम्॥

प्राणापानौ निश्चयबुद्ध्या हृदि रुद्ध्वा
छित्वा सर्वं संशयबन्धं विषयौघान्।
पश्यन्तीशं यं गतमोहा यतयस्तं
वन्दे रामं रत्नकिरीटं रविभासम्॥

मायातीतं माधवमाद्यं जगदादिं
मानातीतं मोहविनाशं मुनिवन्द्यम्।
योगिध्येयं योगविधानं परिपूर्णं
वन्दे रामं रञ्जितलोकं रमणीयम्॥

त्वामाद्यन्तं लोकततीनां परमीशं
लोकानां नो लौकिकमानैरधिगम्यम्।
भक्तिश्रद्धाभावसमेतैर्भजनीयं
वन्दे रामं सुन्दरमिन्दीवरनयनम्॥

महादेवाज्ञया नृपश्रेष्ठो दशरथोऽपि स्वर्गात्तत्रागत्य पुत्रौ स्नुषां चाशिभिरलंचकार। इन्द्रप्रसादेन सर्वेऽपि युधि हता वानराः समुत्थिताः। इन्द्रादयो देवाः अब्रुवन्—

(पूर्वदीप्तिः)

**देवाः**

**गच्छायोध्यामितो राजन्! विसर्जय च बान्धवान्।**
**मैथिलीं सान्त्वयस्वैनामनुरक्तां यशस्विनीम्॥**

भ्रातरं भरतं पश्य त्वच्छोकाद्व्रतचारिणम् ।
शत्रुघ्नं च महात्मानं मातृः सर्वाः परन्तप !
अभिषेचय चात्मानं पौरान् गत्वा प्रहर्षय ।।

सलक्ष्मणं राममेवमुक्त्वा सुरैः सह सहस्राक्षाद्या देवाः सूर्यसंकाशैर्विमानै स्वलोकं ययुः ।

(विमानध्वनिः)

भरतः : धन्योऽस्मि यस्य विषये देवा अपि श्रीरामं निवेदयामासुः। कीदृशी रमणीया कथा प्रस्तूयतेऽत्रभवता हनूमन् !

हनूमान् : भरत भ्रातः ! एतदनन्तरमागामिनि प्रत्यूषे अर्थात् ह्यो यत् संवृत्तं तदपि निशामयतु ।

भरतः : किं संवृत्तम् ?

हनूमान् : महाराजविभीषणः श्रीरामसकाशमागत्य प्राह—

(पूर्वदीप्तिः)

विभीषणः : विजयताम् रघुनन्दनः !

रामः : लंकाधिराज स्वागतं ते ! किमिति भवत आगमनम् ?

विभीषणः : प्रभो ! भवतां स्नानार्थं जलानि, अंगरागाः, वस्त्राणि, आभरणानि, चन्दनानि, दिव्यानि विविधानि माल्यानि च प्रस्तुतानि ।

एताश्च पद्मनिभेक्षणा अलंकारविदो नार्यो भवन्तं स्नापयितुमुपस्थिताः ।

नार्यः : विजयताम् देवः । एता वयमत्रभवन्तं स्नापयितुं भवदनुज्ञां प्रतीक्षामहे ।

रामः : सखे विभीषण ! भवान् सुग्रीव-मुख्यान् वानरवीरान् स्नानेनोपनिमन्त्रयतु । मदर्थे तु सत्यसंश्रयो धर्मात्मा सुखोचितश्च महाबाहुर्भरतस्ताम्यति । तं विना न तु मे स्नानं बहुमतं नापि वस्त्राभरणानि । वन्धो बिभीषण !

विभीषण: : आज्ञापयतु रघुनन्दनः। किं मयानुष्ठेयम् ?

रामः : लंकेश्वर ! स्नानं तिष्ठतु। इदानीमेतत्पश्य यथा वयं क्षिप्रमेव अयोध्यां प्रतिगच्छामः। पद्भ्यां गमने तु पन्था परमदुर्गमोऽस्ति।

विभीषणः : अलमत्र चिन्तया काकुत्स्थ ! अहमत्रभवन्तं अह्नैव अयोध्यां प्रापयिष्यामि। पुष्पकं नाम सूर्यसन्निभं विमानं भवदर्थं पालितं तिष्ठति। कुबेरस्येदं विमानं बलीयसा रावणेन हृतमासीत। इदं कामगं दिव्यं मेघसंकाशम् उत्तमं विमानं भवदर्थं सन्नद्धं तिष्ठति। अनेन भवान् अयोध्यां एकेनैव दिवसेन गन्तुमर्हति।

रामः : बन्धो ! प्रीतोऽस्मि तवानेन प्रबन्धेन ! तर्हि अनुमन्यस्व अस्मान् अयोध्यां प्रस्थातुम्।

विभीषणः : रघुनन्दन ! यद्यहं भवतोऽनुग्राह्यः, यदि च भवान् म गुणान् स्मरति तर्हि किञ्चित्कालमत्र स्थित्वा मया सर्वकामैः अर्चितः सन् भवान् अयोध्यां गन्तुमर्हति। प्रीतियुक्तस्य मे विहितां सत्क्रियां, ससैन्यः, ससुहृद्गणश्च भवान् गृह्णातु-इति मे सप्रणयबहुमानं प्रार्थना ! प्रसीदतु रघुनन्दनः !

रामः : सखे विभीषण ! मम साचिव्यं कुर्वता भवता परमसौहार्देनाहं पूर्वमेव सम्यक् पूजितोऽस्मि। राक्षसेश्वर ! एतद् भवद्वचनं न स्वीकुर्याम्—इति न, किन्तु मे मनः तं भ्रातरं भरतं द्रष्टुं त्वरते, यो मां निवर्तयितुं चित्रकूटमुपागतः, शिरसा याचतो यस्य च वचनं व्रतस्थेन मया न कृतम्। इदानीं च श्वो मे वनवासावधिः पूर्णतां गच्छति। अहमधुना मातरं कैकेयीं, सुमित्रां कौसल्यां, सुहृदं गुहं जानपदान् पौरांश्च द्रष्टुमिच्छामि। सखे अनुजानीहि माम्। मयि भवता मन्युर्न कर्तव्यः ! तव कृतज्ञोऽस्मि

राक्षसेश्वर ! इदानीं पुष्पकं विमानं शीघ्रमेवोपस्थापय ! कृतकार्यस्य मेऽत्र वासः कथमुचितो भवेत् ?

**विभीषणः** : यदीदमेवेष्टमत्रभवतस्तर्हि उपस्थाप्यतेऽयं विमानराजः । विमानराज पुष्पक ! आगम्यताम् अयोध्यागमनाय ।

(विमानस्याागमन ध्वनिः)

प्रस्तुत मिदं पुष्पकविमानम् । काञ्चनचित्रांगं, वैदूर्यमणिवेदिकम्, कूटागारैः परिक्षिप्तं, सर्वतो रजतप्रभम्, पाण्डुराभिः पताकाभिः ध्वजैश्च समलंकृतं, हेमपद्मविभूषितैः काञ्चनैर्हर्म्यैः शोभितं किंकिणीजालैः प्रकीर्णं, मुक्तामणिगवाक्षकं, घण्टाजालैः परिक्षिप्तं, सर्वतो मधुरस्वनं, मेरुशिखराकारं, मुक्तारजत-शोभितैः बृहद्भिः हर्म्यैर्भूषितं, स्फटिकचित्रांगैस्तलैर्वैदूर्यैः महार्हास्तरणोपेतैर्वरासनैश्चोपपन्नं इदं विमानं विश्वकर्मणा निर्मितमस्ति । अनाधृष्यमिदं विमानं भवत्सेवायामुपस्थितम् ! किं भवतो भूयः प्रियं करोमि ?

**रामः** : राक्षसेश्वर ! यैस्सह भवता लंका निर्जितास्त इमे वानरवीराः सत्कार्याः ।

**विभीषणः** : इदं हि मे कर्तव्यं कर्म ! कृतज्ञोऽस्मि वानरवीराणां । वानरराज सुग्रीव !

**सुग्रीवः** : ब्रूहि लंकाधिपते !

**विभीषणः** : सखे ! भवतो दलेन मत्कृते यत्समाचरितं तस्य माहात्म्यं शब्दैः प्रकटयितुं नैव शक्यम् ! लंकायां या दुःस्थितिरासीत् तां विलोपयितुं भवत्सैन्येन बहु साहाय्यमाचरितम्; तत्कृते वयं सपरिकरस्य भवतः कार्तज्ञमावहामः । अस्मत्सत्क्रियां स्वीकर्तुमभ्यर्थ्यन्ते सर्वे वानरवीराः !

सुग्रीवः : भवद्वचनैरेव सत्कृता वयम्। अलमत्युपचारैः।

विभीषणः : मित्र! नास्मिन् विषये भवता किमपि भाष्यम्! कृपयास्मद्भावनां रक्षतु। इमान् रत्नार्थान् स्वीकर्तुमर्हन्ति वानरवीराः।

सुग्रीवः : राक्षस-वानरमैत्री!

वानराः : चिरं जयतात्।

(जयघोषप्रभावः)

रामः : लक्ष्मण! आरोहामस्तावद् विमानराजं पुष्पकम्। स्वर्गादपि गरीयसी जननी जन्मभूमिश्चिराद् अवलोकयिष्यते! एहि मैथिलि! सनाथय विमानम्!

लक्ष्मणः : आर्य! चतुर्दशवर्षपर्यन्तम् अभ्यस्तपादचारेभ्योऽस्मभ्यं विमानारोहणं विचित्रमिवाभाति!

रामः : लक्ष्मण! भरतं द्रष्टुमेव विमानारोहणम् न किल सौख्यार्थम्! अतोऽद्याभ्यासं विस्मर! कथं वा जानकी मन्यते?

जानकी : यथार्यपुत्रस्तथैवेयं जानकी मन्यते!

रामः : वानरवीराः! भवता मित्रकार्यं सम्यक् कृतम्। इदानीं मया अनुज्ञाताः सर्वेऽपि भवन्तो यथेष्टं प्रतिगच्छन्तु। वानरराज सुग्रीव! यदपि स्निग्धेन हितेन च वयस्येन कर्तव्यं तत्सर्वम् अधर्मभीरुणा भवता कृतम्। इदानीं स्वसैन्येनाभिसंवृतः सन् भवान् किष्किन्धां प्रति यातु।

राक्षसराज विभीषण! भवानपि लंकायां स्वराज्ये वसतु। इदानीं भवन्तं सेन्द्रा अपि दिवौकसो धर्षयितुं न शक्ताः?

अहं च सलक्ष्मणसीतोऽयोध्यां यास्यामि । अतो वः सर्वान् आपृच्छे । भवन्तः सर्वेऽपि मामभ्यनुज्ञातुमर्हन्ति !

विभीषण: : राघवेन्द्र !

रामः : किं भवतो मनोगतं मित्र विभीषण ?

विभीषण: : न केवलं ममैव अपितु वानरवीराणामपि प्रार्थनां सनाथयितुमर्हति अत्रभवान् ।

रामः : किं नु वः प्रियं करवाणि ? निःसंकोचमुच्यताम् ।

विभीषणः : भगवन् ! वयमयोध्यां गन्तुमिच्छामः ।

वानराः : सर्वे वयमयोध्यां गन्तुकामाः। सर्वानस्मान् सहैव नयतु।

वानराः : मोदयुता वयं वनान्युपवनानि विचरिष्यामः ।

विभीषण: : भवतो राज्याभिषेकं दृष्ट्वा मातरं कौसल्यां चाभिवाद्य वयं शीघ्रमेव प्रतिनिवर्तयिष्यामः ।

सर्वे : राघवेन्द्र ! सर्वानस्मानयोध्यां नयतु !

रामः : सुहृद्वर्याः ! प्रियात्प्रियतरं लब्धम् ! यदहं ससुहृज्जनः सर्वैर्भवद्भिः सहितोऽयोध्यां गतः प्रीतिं लप्स्ये । वानरेन्द्र सुग्रीव ! वानरैस्सह क्षिप्रं विमानमारोहतु । राक्षसेन्द्र विभीषण ! भवानपि अमात्यैस्सह त्वरितं विमानमारोहतु ।

वानराः : एते वयं विमानं प्राप्ता एव !

रामः : राक्षसेन्द्र ! इह स्थीयताम्, वानरेन्द्र ! इह स्थीयताम् । विमानस्था वीराः !

सर्वे : आज्ञापयतु राघवेन्द्रः !

रामः : लंकातः प्रस्थानकालेऽस्माभिः सर्वैरेव स्थानदेवता नमस्करणीया । स्वर्गतो लंकेश्वरो महामाहेश्वरो रावणो येन स्तोत्रेण नित्यं महेश्वरमर्चति स्म तेनैव अस्माभिः सर्वैरपि महेश्वरः स्तोतव्यः ।

सर्वे : शुभः कल्पः
(सर्वे गायन्ति—'जटाटवीगलज्जलप्रवाहपावितस्थले' इत्यादि-स्तोत्रांशम्)

रामः : विमानराज ! इदानीम् अयोध्यां प्रति प्रतिष्ठस्व !
(विमान-प्रस्थान-ध्वनिप्रभावः)

सर्वे (सामूहिक-स्वरेण) :
१. श्रीरामो विजयतेतराम्
२. रघुनन्दनः श्रीरामो ,,
३. सीतापतिः श्रीरामो ,,
४. लक्ष्मणबन्धुः श्रीरामो ,,
५. दशरथनन्दनः श्रीरामो ,,
६. कौसल्यानन्दनः श्रीरामो ,,
७. भरताग्रजः श्रीरामो ,,
८. मर्यादापुरुषोत्तमः श्रीरामो ,,

रामः : अलमेतैर्जयघोषैः ! पश्यामस्तावत्प्रतिनिवर्तनमार्गम् विमानात्। पश्य वैदेहि ! कैलासशिखराकारे त्रिकूटशिखरे स्थिता विश्वकर्मणा निर्मिता लंका कीदृशी अवलोक्यते !

एतदायोधनं पश्य यत्र वानराणां राक्षसानां च महद्विशसनं जातम् !

एतच्च समुद्रस्य तत्तीर्थं दृश्यते यत्र सागर-मुत्तीर्य वयं रात्रिमुषिताः। विशालाक्षि जानकि ! एष तव हेतोः मया बद्धः नलसेतुरवलोक्यते। सुदुष्करोऽयं सेतुः।

सीते ! ननु पश्य, अयं दृश्यते शंखशुक्तिसमा-कुलः गर्जन् अक्षोभ्यो वरुणालयः सागरः !

इमं च हिरण्यनाभं नाम काञ्चनं शैलेन्द्रं पश्य। असौ हि हनुमतो विश्रामार्थं सागरं भित्वोत्थितः।

एतच्च समुद्रस्य कुक्षौ स्कन्धावारनिवेशनं दृश्यते। अत्र पूर्वं महादेवः प्रसादमकरोत्!

इदं च 'सेतुवन्ध' इति ख्यातं महात्मनः सागरस्य तीर्थं पश्य एतत् त्रिलोकपूजितं तीर्थं महापातकनाशनमस्ति!

**सीता** : नमः पार्वतीपतये। नमः शिवाय!

**सर्वे** : नमः सेतुवन्धेश्वराय

**रामः** : जानकि! अत्रैव राक्षसराजो विभीषणो मत्सकाशे आजगाम। पश्य एषा चित्रकानना किष्किन्धा दृश्यते। सुग्रीवस्य रम्या पुरीयम्। अत्र हि मया वाली हतः।

**सीता** : आर्यपुत्र! अहं सुग्रीवस्य तारादिभार्याभिः अन्येषां वानरेन्द्राणां च स्त्रीभिः परिवृता त्वया साकं राजधानीमयोध्यां गन्तुमिच्छामि।

**रामः** : एष ते शुभः कल्पः सीते! एवमस्तु! विमानराज! क्षणं किष्किन्धायां विश्रम्यताम्! वानरशार्दूल सुग्रीव!

**सुग्रीवः** : आज्ञापयतु रघुनन्दनः!

**रामः** : भवता सर्वे वानरपुंगवाः वाच्याः ते स्त्रीभिः परिवृताः अयोध्यां यान्तु इति।

**सुग्रीवः** : यथाज्ञापयति भवान्।

**रामः** : महाबल! भवानपि सर्वाभिः स्त्रीभिः सह चलतु। अभित्वरतु भवान् येन शीघ्रमयोध्यां प्राप्नुमः।

**सुग्रीवः** : यथा भवते रोचते, तथैव क्रियते।

(विमानावस्थानध्वनिप्रभावः)

**सुग्रीवः** : प्रभो! तारया सहिता इमा वानरयोषितः सीतादर्शनकांक्षया विमानमारोहन्ति।

तारा : नमस्त्रैलोक्यपूजितायै पतिव्रतायै श्रीरामवल्लभायै !

सीता : एत एत । अतोऽग्रे भवतीनां संगत्या मे यात्रा अधिकतरमानन्ददायिनी भविष्यति ।

वानरपत्नी : अस्माकमपीयं यात्रा स्मरणीया भविष्यति ।

रामः : विमानराज ! प्रस्थीयताम् !

(विमानप्रस्थानध्वनिः)

सीते ! काञ्चनैर्धातुभिर्वृतोऽयं ऋष्यमूकगिरिः सविद्युत् तोयद इव दृश्यते। अत्राहं वानरेन्द्रेण सुग्रीवेण समागतः वालिनो वधार्थम् । अत्रैव मया समयः कृतः ।

एषा च सीते ! सा चित्रकानना पुष्करिणी पम्पा दृश्यते यत्र त्वया विरहितोऽहं सुदुःखितः सन् विललाप !

सीता : आर्यपुत्र ! ननु सौभाग्यवती अहं यत्कृते भवता रुदितम् !

रामः : अस्याः पम्पायास्तीरे मया धर्मचारिणी शबरी दृष्टा । अत्र च योजनवाहुः कबन्धो हतः । सीते ! जनस्थाने असौ सः श्रीमान् वृक्षो दृश्यते यत्र तव हेतोः पक्षिराड् जटायुः रावणेन हतः ।

अत्र मया बाणैः खरो निहतः, अत्र च दूषणो निपातितः, अत्र च त्रिशिराः ।

शुभदर्शने ! एतत् तदस्माकम् आश्रमपदम् ! इयं च सा पर्णशाला यत्र त्वं राक्षसेन्द्रेण बलात् हृता ।

सीता : आर्यपुत्रः कम्पितास्मि तद्वृत्तान्तस्मरणेन !

रामः : सीते ! एषा प्रसन्नसलिला गोदावरी दृश्यते, अयं च कदलीवृतोऽगस्त्याश्रमः । पश्य एष महात्मनः

सुतीक्ष्णस्याश्रमः। अयं च शरभङ्गर्षेराश्रमः यत्र सहस्राक्षः पुरन्दरः शक्रः उपयातः।

अस्मिन् देशे मया महाकायो विराधो निहतः! एते ते तापसा दृश्यन्ते येऽस्माभिः पुरावलोकिताः। अस्मिन्नाश्रमे सूर्यवैश्वानरोपमः अत्रिः कुलपतिः, यस्य धर्मचारिणी तापसी अनसूया त्वया दृष्टाः। सुतनु सीते! असौ चित्रकूटः शैलेन्द्रः प्रकाशते! अत्र भरतो मां प्रसादयितुमागतः। पश्य, पश्य, चित्रकूटोपकण्ठे मन्दाकिनी भूमेः कण्ठगता मुक्तावलीव कथं विभाति! एषा सा चित्रकानना यमुना दृश्यते यत्र भरद्वाजर्षेराश्रमः शोभते।

इयं च पुण्या त्रिपथगा गंगा दृश्यते!

सीता : नमः पुण्यसलिलायै गंगादेव्यै!

रामः : एतच्च शृंगवेरपुरं दृश्यते यत्र मम सखा निषादराजगुहो निवसति। सा च दूरतो दृश्यते अयोध्या, मम पितुः राजधानी। अयोध्यां पुनरागच्छसि वैदेहि! प्रणामं कुरु!

सीता : नमः पतिकुलपुर्यै अयोध्यायै!

वानराः : सा दृश्यते अयोध्या! ध्वजापताकाशोभिनी! कदा नु तत्रावतारिष्यामः?

रामः : ततः पूर्वमस्माभिः ऋषेर्भरद्वाजस्याश्रमे तद्दर्शनैरात्मा पावनीयः।

विमानराज! भरद्वाजाश्रमनिकटे अवतरतु।

(विमानावतरणध्वनिः)

(वेदमन्त्राणां ध्वनिः। आश्रमस्य प्रभावः)

रामः : महामुने भरद्वाज! एषोऽहं रामः सकलत्रबन्धुबान्धवो प्रणमामि अत्रभवन्तम्।

भरद्वाजः : रघुवर ! यशस्वी भूयाः ।

रामः : भगवन् ! लंकातोऽयोध्यां प्रतिनिवर्तमाना वयं भवद्दर्शनेन आत्मानं पवित्रीकर्तुं किञ्चित्कालाय-आश्रममध्यास्य अत्यन्तं मुदिताः स्मः ।

भरद्वाजः : किञ्चित्कालाय-इत्यस्य कोऽभिप्रायः ? भवद्भि-रत्रैव रात्रिमुषित्वा श्वः प्रातःकाले अयोध्यार्थं प्रस्थातव्यम् ।

रामः : भगवन् ! भरतो मे प्रतीक्षां कुर्यात् ।

भरद्वाजः : श्रीराम ! तत्सर्वमहं जाने । तपसा, योगबलेन चाहं तदपि जाने, यद् यद् भवता चतुर्दशवर्षेषु कृतम् । सीताहरणं, वानराजसुग्रीवसख्यं, विभीषणसख्यं रावणवधः पुष्पकद्वारा अयोध्यायै निवृत्तिः-इत्यादि-सर्वं मम ज्ञातम् । तपस्वी भरतो तव पादुके पुरस्कृत्य वसुन्धरां साधु प्रशास्ति । प्रतिक्षणं च स भवन्तं ध्यायति । अद्य पुनरत्यौत्सुक्येन भवन्तं प्रतीक्षते ।

अद्य चतुर्दशवर्षाणि पूर्यन्ते । वनवासावधेरव्य-हितोत्तरं त्वया अयोध्यायां भरतो द्रष्टव्यः श्वोदि-वसे । अधुनाश्रमे ममार्घ्यं गृहाण ।

रामः : यथाज्ञापयति महर्षिः ।

भरद्वाजः : पुनश्च, ते वरमेकं दातुकामोऽस्मि । वरं मे गृहाण ।

रामः : भगवन् ! अयं वरो मे दीयताम् । अयोध्यां प्रति गच्छतो मम मार्गे सर्वेऽपि वृक्षा फलवन्तो, मधुस्रवाः भवन्तु येषां फलानि अमृतगन्धीनि बहूनि च भवन्तु ।

भरद्वाजः : तथास्तु । मार्गे स्वर्गपादपसन्निभाः फलाढ्याः पादपा भविष्यन्ति । वानरवीराः तेषां फलानि उपभुज्य आनन्दिताः भवेयुः ।

राम: : भगवन्। यदि भवतोऽनुज्ञा स्यात्तदा निषादराज-गुहाय भरताय च मे कुशलप्रवृत्तिं ज्ञापयितुं हनूमन्तमहं प्रेषयेयम्!

भरद्वाज; : अवश्यम्! अत्र किं प्रष्टव्यम्? प्रेषय हनूमन्तं शीघ्रमयोध्याम्। अयं भरतं आश्वासयिष्यति। वानरा अपि फलानि आस्वादयन्तोऽयोध्यां प्रयान्तु।

(वानराणां किलकिलाध्वनि:)

हनूमान् : सोऽहं श्रृंगवेरपुरे निषादराजं मिलित्वा भवत्सकाशं प्राप्तोऽस्मि। श्रीरामं श्वो द्रष्टासि तपस्विन् भरत!

भरत: : शत्रुघ्न! श्रीरामो वनात्प्रतिनिवर्तते! मातः कौसल्ये! अग्रजो मे समायाति! वधू उर्मिले! लक्ष्मणस्ते विजयी सन्नागच्छति! माण्डवि! आर्या जानकी समागच्छति। मातः सुमित्रे! तपस्ते वर्धते! शत्रुघ्न!

शत्रुघ्न: : आज्ञापयतु देव:!

भरत: : कुलगुरुं वसिष्ठम्, अमात्यं सुमन्त्रं, मातृ:, वधू:, पौरजानपदांश्च अयोध्यायां श्रीरामस्य आगमनेन परिचितान् कारय! अयोध्यापुर्यां घोषणाः कारय! दीपमालिकां समायोजय! श्रीरामस्य स्वागतार्थं प्रबन्धान् कुरु।

शत्रुघ्न: : यथाज्ञापयति देव:। अहमधुनैव एतान् सर्वान् एतेन परिचिनोमि। घोषकै: घोषणाश्च कारयामि।

उद्घोषक: : भो भो: अयोध्यावासिन:! शृण्वन्तु! सावधाना: शृण्वन्तु!—

दशरथनन्दनो भरताग्रज: श्रीराम: सलक्ष्मण-सीत: चतुर्दशवर्षाणि वने व्यतीत्य रावणं हत्वा

लंकायां सौराज्यं संस्थाप्य विजयश्रियालिंगित: सन् श्वोऽयोध्यामागच्छति । अत: सर्वैस्तत्स्वागताय सन्नद्धैर्भाव्यम् । सर्वे नन्दिग्रामे श्रीभरतसकाशे समवेताः भवन्तु ! प्रातःकाले श्रीरामस्य प्रत्युद्गमनं कुर्वन्तु ।

(प्रातःकाल-ध्वनिप्रभावः)

भरतः : आयुष्मन् शत्रुघ्न ! अपि नाम सर्वा व्यवस्था जाता ?

शत्रुघ्नः : भ्रातः ! भवदाज्ञानुसारं श्रीरामस्य प्रत्युद्गमनार्थं सर्वे प्रबन्धाः सम्पन्नाः । कुलगुरुर्वसिष्ठः सर्वं जानाति । मार्गाः समीकृताः तथा च जलेन सिक्ताः । गृहेषु पताका पुष्पमालाश्च संयोजिताः । मार्गे लाजाः अवकीर्णाः । मन्त्रिणो, मातरः, माल्यमोदकहस्ता नागारिकाः, वन्दिजनाश्च सर्वे नन्दिग्रामं प्राप्ताः ।

भरतः : शोभनम् ! अस्मत्कुलदेवता सविता उदयगिरिमारोहति । श्रीरामेण विनेदानीं प्रतिपलं युगायते ।

हनूमान् : आर्य भरत । मन्ये वानरा अयोध्यानिकटं प्राप्ता । मार्गे फलानि खादन्तः गोमतीं नदीं तरन्तः सालवनं आन्दोलयन्त एते कोलाहलं कुर्वन्ति (दूरतः कोलाहल-ध्वनिः) ननु श्रूयते वानराणां ध्वनिः ?

भरतः : आम् ! श्रूयते वानराणां ध्वनिः !

हनूमान् : आर्यभरत ! आकाशे पश्यतु ! तदेतत् पुष्पकविमानं दूराद्दृश्यते ! एतस्मिन् वीरौ भ्रातरो रामलक्ष्मणौ वैदेह्या, सुग्रीवेण, विभीषणेन च साकं स्थितौ ।

[शत्रु]घ्नः : ननु विमानं वेगेन निकटे आयाति ।

हनूमान् : वर्धसे भरत ! वर्धसे । पश्य विमानम् अयोध्याधरां स्पृशति !

सर्वे : श्रीरघुनन्दनो विजयतेतराम्
श्रीजानकी विजयतेतराम्
श्रीलक्ष्मणो विजयतेतराम्

(जयघोषध्वनिः)

भरतः : आर्य ! अभिवादये ।

रामः : अये तपस्विन् ! गाढं परिष्वजस्व ! कां दशां प्राप्तोऽसि ! आयुष्मन् ! त्वया यत्कृतं तत्कर्तुं कोऽपि न क्षमः ! वानरेन्द्र सुग्रीव ! राक्षसेन्द्र विभीषण ! अयमेव स भरतः—यो मां वनवासावधेरव्यवहितोत्तरमयोध्यां प्रापितवान् । भरत ! अपि माता कैकेयी कुशलिनी ? माता सुमित्रा च कथं वर्तते ? माता कौसल्या कुत्रास्ति ? कथं वधूः उर्मिला, वधूः श्रुतकीर्तिः, वधूः माण्डवी ? चल, सत्वरं कुलगुरोर्वसिष्ठस्य पादौ स्पृशामः ! वनवासानन्तरमेते सर्वे ममाधिकतरं प्रियाः संवृत्ताः !

भरतः : आर्य ! एते सर्वेऽपि अयोध्यावासिनो भवतः प्रत्युद्गमनार्थमायाता, भवतो राज्याभिषेकं च द्रष्टुकामाः सन्ति ।

रामः : अवतरामस्तावत् । विमानराज ! इदानीं भवान् कुबेरसकाशं गन्तुमर्हति ।

(विमानप्रस्थानध्वनिः)

(वेदमन्त्रोच्चारध्वनिः)

भरतः : कुलगुरो ! समस्ततीर्थेभ्य आहृतैः अभिषेकजलैः स्नापितायः आर्यरामचन्द्राय राज्यमुकुटं प्रत्यर्पयितुं सानुकम्पो भवितुमर्हति भवान् ।

**वसिष्ठः** : (मन्त्रोच्चारपुरस्सरं) अहं दशरथनन्दनं श्रीरामचन्द्रं अयोध्याधिपतिमुद्घोषयामि । अभिषिक्तस्य नृपते-र्विरुदावली गीयताम् ।

**गायकः** : ककुत्स्थकुलपर्यायकलशार्णवकौस्तुभः
कौसल्यासुकृतव्रात - कल्पकप्रसवोदयः ।
जानकीलोचनद्वन्द्वचकोरानन्दचन्द्रमाः ।
सर्वराक्षसवेतालसमुच्चाटनमान्त्रिकः ।
तपोधनजनाकांक्षातटाकवनतोयदः ।
प्राणप्रतिष्ठा क्लिष्टानां प्रपन्नानां परायणम् ॥
खरदूषणकिम्पाकखण्डनैकपरश्वधः ।
दुर्मोचनीचमारीचकीचकप्रबलानिलः ।
गृध्रराजस्य नाकादिलोकाक्रमणवर्तनी ।
शबरीचित्तकुमुदशारदज्योत्स्निकोदयः ॥
सुग्रीवराज्यसामग्री सुदिनं काननौकसाम् ।
दुष्टनक्तञ्चरस्तोमधूमकेतुविजृम्भणम् ॥
कुम्भकर्णमदाम्भोधिस्तम्भने कुम्भसम्भवः ॥
बलीयोरावणप्राणपाषाणदलनाशनिः ।
विभीषणस्य साम्राज्यविश्राणनसुरद्रुमः ।
अयोध्यापुरनारीणाम् अक्ष्णोरत्यद्भुतोत्सवः ॥
अभिषिक्तो यथावच्च वसिष्ठाद्यैर्महर्षिभिः ।
रमते मम तेजस्वी रामः कामसमो हृदि ।

**वसिष्ठः** : श्रीराम ! तव राज्ये प्रजाः प्रसन्ना भवन्तु । अत्र दुर्बलघातो न स्यात् । सर्वे सद्वृत्ति-सहितास्तिष्ठन्तु । प्रजायाः सुखं स्वसुखं जानीहि ।

**रामः** : यथादिशति भवान् !

शत्रुघ्नः : विजयताम् महाराजः !

रामः : आयुष्मताप्यहं महाराज इति सम्बोधनेन व्यपदेश्यः ?

शत्रुघ्नः : आर्य अद्यप्रभृति मासं यावत् अयोध्यायां दीपमालिका आयोज्यते। आर्यभरतस्येयमिच्छा इमां दीपमालिकां अवलोक्यानुगृह्णात्वार्य इति।

भरतः : सत्यमाह शत्रुघ्नः ! इयमालोकिनी दीपमालिका अयोध्यायां सौहार्दस्य, भ्रातृभावस्य, सौख्यस्य, शान्तेः, समृद्धेश्च दूती भवतु। अत्र सर्वे सम्मिल्य सौहार्देन कालं यापयन्तु। श्रीरामस्य स्वागतार्थं समायाजितेयमालोकिनी सदैव स्मरणीया स्यात्।

गायकाः : दुःखदारिद्र्यरोगप्रवृद्धं तमो
नैव दृश्येत भूमौ कुहापि प्रभो!
सन्तु सर्वत्र सर्वे सदानन्दिता
राजतां दीपमालेयमालोकिनी ॥
राजतां दीपमालेयमालोकिनी ॥
भ्रातृभावेन सत्यश्रमाभ्यां तथा
लोकसेवाव्रतं पाल्यतां मानवैः।
अन्धकारं निराशाप्रसूतं दृढं
ध्वंसयेद् दीपमालेयमालोकिनी ॥
राजतां दीपमालेयमालोकिनी ॥
मानसे मानसे नित्यमाशामयै-
र्दीपकैः सुप्रकाशः सदा कीर्यताम्।
द्वेषमुत्सार्य प्रेमव्रतं पाल्यतां
मान्यतां दीपमालेयमालोकिनी ॥
राजतां दीपमालेयमालोकिनी ॥

क्षुद्रभावान् भृशं तर्जयन्ती नृणां
सौमनस्यं तथौदार्यमातन्वती ।
अन्धकारात्प्रकाशं नयन्ती जगद्
राजतां दीपमालेयमालोकिनी
राजतां दीपमालेयमालोकिनी ॥

(प्रसन्नताद्योतकसंगीध्वनिना समापनम्)



# दाराशिकोहीयम्

## ध्वनिनाटकम्

प्रणेता

**डा० रमाकान्त शुक्लः**

# पात्राणि

पुरुषपात्राणि

१. भारतध्वनिः
२. दाराशिकोहः—शाहजहानस्य पुत्रः
३. सूत्रधारः—उषानिरुद्धनाटकस्य सूत्रधारः
४. उद्घोषकः
५. शाहजहानः—प्रसिद्धमुगलसम्राट्
६. नागरिका/सामन्ताः
७. चन्द्रभानपंडितः—कविसंमेलनसंयोजकः
८. पण्डितराजगन्नाथः—प्रसिद्धसंस्कृतकविः
९. वाचकः
१०. औरंगजेव—शाहजहानस्य पुत्रः, दाराशिकोहस्यानुजः
११. सिपहरशिकोहः—दाराशिकोहस्य पुत्रः
१२. नजरवेगः
१३. द्वारपाल
१४. व्यापारी-प्रथमः
१५. ” द्वितीयः
१६. धर्मगुरु-१
१७. ” २
१८. दानिशमन्द खानः
१९. काजी
२०. वधिकः
२१. प्रहरी

स्त्रीपात्राणि

२२. जहाँआरा—शाहजहानस्य पुत्री, दाराशिकोहपक्षधरा तद्भगिनी
२३. नादिरा—दाराशिकोहस्य पत्नी
२४. रोशनारा—शाहजहानस्य पुत्री, औरंगजेबस्य पक्षधरा

रमाकान्त शुक्ल-प्रणीतम्

# दाराशिकोहीयम्

## (ध्वनिनाटकम्)

**ध्वनिः** : अहं भारतदेशोऽस्मि। मत्क्रोडे बहवः सुपुत्राः कुपुत्राश्च अक्रीडन्। बहवो मत्पुत्राः प्राज्यं राज्यं तृणमिव परित्यज्य मानवतामेव सिषेविरे; बहवः प्रभवोऽपि सन्तः प्रमत्ता नैव जाताः। जनक-बुद्ध-भर्तृहरि-प्रभृतिषु अनेकेषु राजर्षिषु अन्यतमो मत्पुत्र आसीद्—दाराशिकोहः, यः संकीर्णतां परिहाय उदारतामेव प्रचारयामास, यो हि प्रभुतामपि प्राप्य प्रमत्तो नैव संजातः; यश्च लक्ष्म्यालिङ्गितोऽपि सरस्वतीं सदैव समादृतवान्। प्रपितामहस्याकबरस्य सहिष्णुता, पितामहस्य जहाँगीरस्य न्यायप्रियता, पितुः शाहजहानस्य साहित्यकलाप्रेम; मातुः मुमताजमहलदेव्याः सौन्दर्यं च अस्मिन्नेकत्रैव दृग्गोचरीभवति स्म। आबाल्यात् मृत्युपर्यन्तञ्च अयं मानवतामेव सर्वोच्चधर्मरूपेण अग्रहीत्। संकुचितविचाराणामग्रेऽस्य शिरः कदापि न नतम्। ज्ञानसाधनायामस्य रुचिः सर्वदैव अजायत। अतीतं प्रत्यक्षीकुर्वन्नहं पश्यामि यदयं आगरादुर्गे स्वपुस्तकालये ज्ञानसाधनायां लीनस्तिष्ठति।

(१)

**दाराशिकोहः** : (स्वगतम्) अहा, संस्कृतवाङ्मयस्य गौरवं गिरामतीतम्। दुःखदावानलदग्धानां प्राणिनां कृते गीताया एक एव श्लोकः शान्तिकरः। राज्यस्य कुचक्रेभ्यः खिन्नाय मह्यं भारतीयज्ञानग्रन्थाः

गीतोपनिषदादयः कमपि लोकोत्तरमानन्दं ददति। योगवासिष्ठादिग्रन्थानां पठनमात्रेण मनुष्यः ह्यलोकसामान्यां भावभूमिमुपतिष्ठति।

जहाँआरा : (प्रविश्य) दाराभ्रातः आगन्तुं शक्नोमि ?

दारा० : अये! भगिनी जहाँआरा! ननु मे सौभाग्यात्सम्प्राप्ता अत्रभवती। आयातु, तिष्ठतु।

जहाँआरा : किं चिन्त्यते ?

दारा० : ह ह ह, चिन्ता तु बह्व्यः सन्ति। प्रथमा चिन्ता तु भवद्विषयिणी एव। न जाने कदापर्यन्तमनूढा स्थास्यति भवती। कीदृशी विडम्बना।

जहाँआरा : (निःश्वस्य) भ्रातः अयं तु सम्राजा अकबरेण कृतो नियमः। किं क्रियेत!

दारा० : एतादृशानेव नियमान् तु शोचामि। यथा हि वीचि-समीरयोः प्रश्नोत्तरयोः प्रकृतिपुरुषयोः रोहिणीचन्द्रयोः अधीतिबोधयोः नित्यः संबन्धोऽस्ति तथैव स्त्रीपुरुषयो-रपि। एतयोः पृथक्करणाय यः कोऽपि नियमः सः नियमाभासः एव। आनन्दस्वरूपपरमात्मनोंऽशस्य जीवात्मनः कृते दुःखदानायेयम् अनधिकारचेष्टा।

जहाँआरा : भ्रातः कथं विस्मरति भवान्, यद् भवान् राजकुले समुत्पन्नः। राजनियमानेवमुल्लंघ्य कोपलब्धिः स्यात्? राजकुले हि जन्म नाम प्राणिनः कृते बन्धनम् यत्र कृत्रिमप्राणवायुनैव जीवनं चलति न तु नैसर्गिकेण। अस्तु। किमिदं लिख्यते ?

दारा० : भगिनि, भारतीयज्ञानं फारसीभाषायां निदधातुमीहे। अनुवादे यद्यपि मूलग्रन्थस्यास्वादः सर्वथा नैव कर्तुं शक्यते तथापि अकरणात् मन्दकरणं श्रेयः। गीतायाः अनुवादः प्रारब्धः।

जहाँआरा : कथमिव ? श्रोतुमर्हामि ?

दारा० : ज्ञानधनवितरणे न कापि हानिः। श्रूयताम्...ईं नुस्खए राहत अफ़ज़ा।

सालिके हक़ीक़त, बनाशाए ईजदी मम्लुअज़ मारफ़ते ग़ैर-मुतनाही व कुषाइन्दए असरारे मख़फी मुसन्निस, औराक़ेईं स्वामी वेदव्यासस्त कि सिफ़ातुश अज़हीतये मुतालए इंसाँ वैरूँ ।

जहाँआरा : भ्रातः ! वस्तुतो मुगलकुलालंकारो भवान् । एको भवान् मम भ्राता अपरतश्च औरंगजेबः । यदि स श्रृणुयादिमां कृतिं तर्हि क्रोधान्धः स्यात् । तस्मिन्नेव दिने, स्मरति भवान्, श्रीमतां मुल्लाअब्दुल्लतीफ सुलतानपुरी-महोदयानामग्रे कथमिव भारतीयान ग्रन्थान् निन्दति स्म ।

दारा० : भगिनि, तेन एते ग्रन्था: नैव पठिताः। तदव तु एतान् अधिक्षिपति । यदि सौभाग्यात् कदाचिदेतान् ग्रन्थान् सः श्रृणुयादपि तर्हि तस्य वृत्तिरुदारा स्यात् ।

जहाँआरा० : भ्रात:, श्रवणस्य वार्ता दूरे तिष्ठतु । स तु कल्पनयैव एतेषां निन्दां करोति । दुराग्रही अभिनिवेशी स न साहित्यं श्लाघ्यं मन्यते, न वा कलां, नापि संगीतम् । सर्वमपि तन्मते धर्मविरुद्धम् ।

दारा० : तस्य धर्मदृष्टिर्विचित्रा । तस्य दृष्टौ ते सर्वेऽपि भारतीया: काफिरा:; तेषां नाश: एव धर्मानुष्ठानम् । तस्याधिकारे यदि राज्यं गच्छेत्तदा तु स एकस्मिन्नेव दिने इस्लामधर्मेतरव्यक्तीनां वधं कारयेत् । (हसति) मया पवित्रं कुरानमधीतम्, गीता चाप्यधीता । मन्मते तु द्वावपि मानवस्य कल्याणाय एव । यदि व्याख्याकर्तार: अन्यथा व्याख्यां कुर्युस्तदा विवेकशीलस्य पाठकस्य कर्तव्यमस्ति स्यत्स सत्यां व्याख्यामुपस्थापयेत् ।

जहाँआरा : नि:संशयम् ।

दारा० : अहं पृच्छामि भगिनि, त्वाम्, वयं भारतभूमौ क्रीडिता: अस्माकं मस्जिदा अत्रत्यमृत्तिकया

निष्पन्नाः, अस्माकं स्वास्थ्यं अत्रत्यजलवायुना प्रवृद्धम्, अस्माकं सैनिकाः अत्रत्याः एव, अस्माकमेष देशः वयमस्य राजानस्तदा अत्रत्यं ज्ञानं दर्शनं विचारसारं चानधीत्य किमु वयं विकासं लब्धुं शक्नुमः? यदवधि वयं भारतभूमेरात्मानं नावगच्छामस्तदवधि नास्माकं कल्याणम्। अतः औरंगजेबः करोतु धर्मस्यानर्थम्, वर्द्धयतु तम् सुलतानपुरी–महोदयाः दुराग्रहशीलया अनुदारया धर्मव्याख्यया किन्त्वहं तु "धर्मः प्रोज्झितकैतवोऽत्र विहितः", इति भावनामेवादरेण गृह्णामि।

जहाँआरा : वस्तुतो यदपि अजमेरनगरे भवज्जन्मतः पूर्वं जगन्नाथपंडितेन भविष्यं वीक्ष्य मात्रे भवद्विषये निवेदितमासीत्, तत्सर्वमपि सत्यमेव। माता तु तं मुक्ताफलैस्तोलयितुमिच्छति स्म। किन्तु सः पुनरायात एव न। माता च दिवंगता।

दारा० : (निःश्वस्य) मातः! तवेच्छा पूरणीयास्माभिः। जगन्नाथपंडितोऽन्वेषणीयः स्यात्। चन्द्रभानपंडितं छत्रसालरावं चास्मिनकार्ये नियोजयिष्यामि।

जहाँआरा : मातुरिच्छापूरक! अपरापि तु तस्या इच्छा आसीत्। सापि किं भवतैव पूरणीया, पित्रा वा?

दारा० : का सा?

जहाँआरा : परवेज़महोदयस्य कन्यया करीमुन्निसावेगमनादिरया साकं भवतां विवाहस्य।

दारा० : ओः! येषां जनानां मनसि स्वविवाहस्य चिन्ता जागरूका ते सर्वेषामेव विवाहं चिकीर्षन्ति।

जहाँआरा : अलमलं बहु व्याख्यानेन। लिखतु ग्रन्थान्।

(२)

(शहनाई-वादनम्)

जहाँआरा : वर्द्धापनं भ्रातः, वरवधूयुगलं सुखीस्यात्। भ्रातृजायया साकं बहु शोभते भवान्! वर्द्धापनम्।

दारा० : भगिनि, भवत्या त्वहं वर्धापितः किन्तु न जाने कदाचित् भवत्यपि वर्धापनीया भविष्यति न वा।

जहाँआरा : इयं चिन्ता तु अधुना न विधेया भवता। प्रथमं तु भवान् अतिथीनां सत्कारार्थं सज्जीभवतु। बुन्देलाछत्रसाल-राजाजयसिंह-चन्द्रभानपंडितप्रभृतयः समायान्ति। छत्रसालमहानुभावैस्तु अद्य भवद्विवाहोपलक्ष्ये रात्रौ नृत्यरूपकमपि समायोजितम्। आगरादुर्गे साहित्यसङ्गीतकला-त्रिवेणी प्रवहिष्यति अद्य।

दारा० : जानामि।

(३)

(नृत्यस्वरः)

सूत्रधारः : परमाह्लादस्य विषयो यत् तत्रभवत्या करीमुन्निसा-नादिराबेगमदेव्या साकं तत्रभवतो राजकुमारदाराशिकोहस्य शुभविवाहः संवृत्तः। तदुपलक्ष्य एव उषानिरुद्धं नाम नृत्यरूपकं प्रस्तूयते। अस्य निर्देशनं बुन्देलाछत्रसालमहोदयेनातीव मनोयोगेन कृतमस्ति, अतोऽसौ वन्दनीयः। अपि च गुलरुखबाई-वैकुण्ठबाई - मनोहरबाई - प्रभृतयोऽस्मिन्नभिनयं कुर्वन्ति। न नु सौभाग्यस्माकं यत् स्वयं सम्राजः-शाहजहानमहोदयाः तेषां पुत्राश्चापि अस्मिन्न-वसरे समुपस्थिताः। सर्वानपि सामाजिकानभिनन्दय-न्नहमिदं नृत्यरूपकम् वरवधूकृते उपहारस्वरूपेण समर्पयामि। इदं प्रारभ्यते नृत्यरूपकम्॥

(नृत्यस्वरः। करतलध्वनिः)

(४)

जहाँआरा : भ्रातः भ्रातृजायया साकमस्मिन् शयनगारे ससुखं रात्रिं यापयतु। मया व्यवस्था स्वयमवलोकिता, शुभा रात्रिः।

दारा० : शुभा रात्रिः। नादिरे, नृत्यरूपकं कीदृशमनुभूतम् ?

नादिरा : अतीवानन्दकरं, यथोषायाश्चेतसि अनिरुद्धः आयातस्तथैव मम मनसि भवान् पदं कृतवान्। किन्तु श्रीमान् औरंगज़ेबो मुराद भ्रातुः शुजाभ्रातुश्च पश्चात्कथमुत्थाय गतः ?

दारा० : प्रिये ! भ्रात्रे औरंगजेबाय साहित्य-संगीत-कला तथा न रोचन्ते यथाऽन्येभ्यः। विशेषतो नृत्यं तु सः धर्मं-विरुद्धं मन्यते।

नादिरा : कथम् ?

दारा० : तस्य दृष्टिकोणस्य व्याख्या कठिना। अस्तु प्रिये, भवतीं जीवनसङ्गिनीमुपलभ्याहं धन्योऽस्मि। 'प्रिया च भार्या, प्रियवादिनी चे'ति यत्कथितं तत्सर्वमेव घटितं भवत्याम्। मम मातुरत्युत्कटेच्छासीदत्रभवतीं पुत्रवधूरूपे विलोकयितुम्।

नादिरा० : यद्यद्य माता अभविष्यत्तदा कीदृशं सुखं सर्वेषां कृते स्यात्।

दारा० : प्रिये, पश्य आकाशतारकः पृथिव्यां पतति। मन्ये स्वर्गीयतेजस्त्वां दिदृक्षु पृथिव्यामवतरति।

नादिरा० : देव ! अयन्तु उल्कापातः। भयंकरोऽयं दुःशकुनः। न द्रष्टव्यः।

दारा० : प्रिये, किमेवं कातरासि ? चिन्ता न विधेया। निद्रासुखं भजावः।

नादिरा० : यदा भवान् निद्राचौरस्तिष्ठति तदा निद्रां कथमिव लभे।

दारा० : अहो इदम् कवित्वम् ? मन्ये साक्षात्कवितेव मया लब्धा।

नादिरा० : अलमलमलीकवादेन।
(सुखसङ्गीतम्)

(४)

उद्घोषकः : सावधाना भवन्तु। सम्राजः शाहजहानमहोदयाः दिल्लीदुर्गे सभायामागच्छन्ति।

**सर्वे०** : विजयताम् महाराजः ।

**शाहजहानः** : प्रजावासिनः राज्याधिकारिणश्च ! वयमद्य स्वकीयं ज्येष्ठं पुत्रं दाराशिकोहं यौवराज्येऽभिषिक्तं कुर्मः । स एवास्माकं मयूरसिंहासनस्योत्तराधिकारी भविष्यति । वयम् आशास्महे, यद् युवराजः प्रजाः सम्यक् पालयिष्यति । अस्मिन् प्रमोदावसरे भवन्तः सर्वेऽपि विविधसांस्कृतिककार्यक्रमान् सनाथयन्तु । रात्रौ दीवानेखासभवने आयोजिते विविधभाषाकवि-सम्मेलनेऽपि भवन्तो निमंत्रिताः सन्ति ।

**सर्वे०** : विजयताम् महाराजः, विजयताम् महाराजः (करतल-ध्वनिः)

(५)

**उद्घोषकः** : अवहिता भवन्तु । महाराजाः युवराजश्च सभायामा-गच्छन्ति ।

**सर्वे०** : विजयताम् महाराजः, विजयताम् महाराजः ।

**शाहजहां०** : चन्द्रभानपंडित ! कविसम्मेलनस्य कार्यं प्रारभ्यताम् ।

**चन्द्रभान पण्डितः** : धरामवतीर्णे साक्षात् स्वर्गेऽस्मिन् दिल्लीदुर्ग-विशेषास्थानभवने समायोजिते विविधभाषाकवि-सम्मेलने सर्वेषामपि भवतामभिनन्दनं करोमि । वस्तुतः राज्यलक्ष्मीसमालिंगिता जनाः सारस्वत-वैभवं नाद्रियन्ते किन्तु सम्राट् युवराजश्च द्वावपि विद्याव्यसनिनौ । कलासाहित्यसंगीतविद्यासमाराधकं युवराजं दाराशिकोहं प्राप्य, मन्ये, सम्राट् 'सर्वतो जयमन्विच्छेत् पुत्राच्छिष्यात्पराभवम्' इति आभाणकं चरितार्थं करोति । अस्मिन् सम्मेलने युवराजेन सादरमाहूताः, श्रीमन्तः कवीन्द्राचार्याः, ईरानदेशीयाः कुदसीमहोदयाः, शैदामहोदयाः, सम्राजा पंडितराजोपाधिना सत्कृता दाराशिकोहस्य

संस्कृतगुरवः जगन्नाथमहाभागा तथा चान्ये अनेके कविललामाः स्वकीयाः कविताः श्रावयिष्यन्ति। आधुना प्राथ्यन्ते पंडितराजजगन्नाथमहोदयाः स्वीयां रचनां श्रावयितुम् ।

सर्वे० : स्वागतं पंडितराजस्य ।

पंडितराजः : एकस्त्वंऽगहने स्मिन् कोकिल न कलं कदाचिदपि कुर्याः ।
साजात्यशंकयाऽमी न त्वां निघ्नन्तु निर्दयाः काकाः ।।

चन्द्रभान : वस्तुतोऽन्योक्तिरचनायां पण्डितराजो विशिष्यते। अपराप्यन्योक्ति; प्रस्तूयताम् ।

पण्डितराजः : प्रस्तूयते इयमन्योक्तिः

**सौरभ्यं भुवनत्रयेऽपि विदितं**
**शैत्यं तु लोकोत्तरम्**
**कीर्तिः किञ्च दिगङ्गनांगणगता**
**किन्त्वेतदेकं शृणु ।**
**सर्वानेव गुणानियं निगिरति**
**श्रीखण्ड ! ते सुन्दरान्**
**उज्झन्ती खलु कोटरेषु गरल-**
**ज्वालां द्विजिह्वावली ।।**

सर्वे : साधूक्तम् ।

पंडितराज : द्वितीया अन्योक्तिरस्ति,
अयि मलयज महिमायं
कस्य गिरामस्तु विषयस्ते ।
उद्गिरतो यद् गरलं
फणिनः पुष्णासि परिमलोद्गारैः ।।

(करतलध्वनि:)

वाचकध्वनि : किन्त्वेतदायोजनं रोशनारौरङ्गजेबाभ्यां नारोचत। रात्रौ दिल्लीदुर्गे उभयोर्वार्तालापोऽभूत्

(५)

रोशनारा : भ्रातः, औरंगजेव, आगम्यताम् । किमु भवता कवि सम्मेलनस्य रसास्वादः कृतः ? श्रूयते विद्याव्यसनिना युवराजदाराशिकोहेन संस्कृतकवयः सम्मानिताः ।

**औरंग०** : रोशनारा भगिनि ! अद्यावधि तु पंडिता एव सम्मानिताः गीतोपनिषदादीनामनुवादा एव कारिताः, वेदव्यासस्य प्रशंसैव कृता, छत्रसाल-प्रदर्शितं नृत्य-रूपकमेव प्रशंसितम्, रिसाला-ए,-अकनुमा एव लिखितः, सिर्रं-उल-असरार, मज्मुअलबहरीन, अथर्ववेदानुवाद-प्रभृतय एव ग्रन्थाः लिखिता, अग्रे न जाने भ्राता दाराशिकोहेन किं किं करिष्यते !

**रोशनारा** : सर्वमपि करिष्यते स्वधर्मसेवां विहाय । भ्रातः ! दारा तु नाम्नैव अस्माकं भ्राता । स तु वस्तुतः विधर्मी । अस्य धर्मविरुद्धकृत्याणि वीक्ष्य मम मनो ज्वलति । मया तु एतदपि श्रुतं यज्जगन्नाथस्य कवितायां दारा कोकिलरूपेण मलयजरूपेण च कथितः भवांश्च काकरूपेण सर्परूपेण च ।

**औरंग०** : रोशनारा भगिनि, चिन्तां मा कुरु । यदि सः सर्व-शक्तिमान् कृपां करोति, तर्हि अहमस्य विधर्मिण उच्छेदं करिष्यामि । अहं श्व एव दक्षिणं गन्ता । मया मीरजुमलादीनां साकं मैत्री कृता वर्तते ! भवती दक्षिणस्थिताय महं अत्रत्यान् सर्वानपि समाचारान् गुप्तरूपेण प्रेषयिष्यतीति मे विश्वासः ।

**रोशनारा** : स्वस्ति भवते, भवान् धर्मराजस्थापनाय प्रभुर्भूयात् । अहं दाराशिकोहस्य जहांआरायाश्च कार्यव्यापाराणां सूचनां भवते दास्यामि ।

**वाचकध्वनिः** : आगरादुर्गे उदारचित्तौ जहाँआरादाराशिकोहौ किं ब्रूतः शृणुमः—

(६)

**जहाँआरा** : दारा भ्रातः कथमिव चिन्ताग्रस्तो भवान् ?

**दारा०** : जहांआरा भगिनि, एकतस्तु पितृपादाः दिल्लीतोऽत्र आगराम् आगत्य रुग्णाः सन्ति, अपरतश्च भ्राता औरंगजेवस्तद्विरुद्धमस्मद्विरुद्धं च आचरति । स धर्मस्य नाम्नि प्रजासु परस्परं द्रोहम् कारयति । न जाने विघटनकारिणीं धर्मभावनां परिपोष्य सः किं

कर्तुमना अस्ति। मया सन्देशः प्राप्तो यत्तेन मुरादबख्शभ्रात्रा शुजाभ्रात्रा च साकं सन्धि विरच्य आगराग्रहणे बुद्धिर्निबद्धा। मीरजुमलादीनामपि साहाय्यं तस्मै प्रस्तुतम्।

जहां० : तर्हि महाराजाः सूचनीयाः स्युः।

दारा० : ते रुग्णाः सन्ति, वार्द्धके स्वपुत्राणां विग्रहं द्रक्ष्यंति, इति कीदृशी विडंबना? यदि राज्यस्य इदमेव सुखं तर्हि तु कष्टमेव राज्यम्। अहं तु कन्धारयुद्धे असाफल्यमवाप्य पितृमहोदायानां समक्षं गन्तुमपि जिह्रेमि।

जहां० ; कन्धारे असाफल्यस्य कारणमेकमिदमप्यासीत् यद् भवत्सेनायां विश्वासघातिनो वहवः आसन्। अधुनापि दिल्याम्, अहमदाबादे, औरंगावादे राजमहले च भवद्विरुद्धं षडयंत्रकारिणो जागरूकाः। लोकाः कथयन्ति औदार्यम्, धर्मावलंबनम्, ज्ञानार्जनञ्च प्राणिनां सुखदायकानि किन्तु भवत्कृते तु एतेषां वैपरीत्यमेव। चलतु, महाराजसमीप एव विचारं करिष्यामः।

दारा० : यथेच्छति भवती। खिन्नाय पित्रे अपरमपि खेदं दातुं चलामि।

(७)

(युद्धवाद्यम्)

औरंग० : वीरा अस्माभिः धर्मद्विट् दारा अवश्यमेव पराजेतव्यः। दक्षिणतो वयम् दूरे स्मः। वयं धर्मयुद्धे मरिष्यामो जेष्यामो वा। साहसिनः सन्तो अभियान्तु। मया श्रुतमासीत् यन्महाराजः अत्यन्तं रुग्णः। दारा च तेभ्यो मयूरसिंहासनमपहर्तुमिच्छति। किंमु पवित्रसिंहासनमारोढुं कश्चिद् विधर्मी प्रभवति?

सर्वे० : कदापि न। कदापि न।

औरंग० : तर्हि अभियान्तु वीराः। आगरादुर्गे एव विजयोत्सवः स्यात्।

(प्रस्थानकोलाहलः)

(८)

(युद्धवाद्यम्)

दारा० : वीरसैनिकाः! अद्य सामूगढ-युद्धे भवतां वीरतायाः परीक्षावसरः। अस्माकमेव भ्रात्रा अस्मदुपरि आक्रमणं कृतम्। तेन नेदं चिन्तितं यज्जीवत्येव पितरि तत्समक्षमेव तदंशानां कलहस्तस्मै दुःखं दास्यति। अस्तु, सम्प्राप्ते युद्धे तत्र पराक्रमो वीराणां परमं कर्तव्यमिति सज्जीभवन्तु विजयं वा मृत्युं वालिंलिगितुम्। साहसे श्रीः वसति।

('छिन्धि भिन्धि' इत्यादिध्वनिय तुपकादिध्वनिः। युद्धध्वनिः। 'अये सामूगढयुद्धे महाराजश्छत्रसालो वीरगतिप्राप्तः','खलीलुल्लाखानेनविश्वासघातः कृतः' "युवराज दाराशिकोहस्तस्यैव विश्वासघातिनो वचसि श्रद्धाम् दधानो यदा हस्तिपृष्ठादवतीर्य अश्वमारुरोह, तदैव 'दारा व्यापादितः' इति अपवादः प्रसृतः।" "अये दारापक्षीयाः विश्वासघातिन एव तस्य पराजयस्य कारणम्", "दारा पलायितः। अधुना भारतस्य भाग्यमेव परिवर्तितं स्यात्", कलत्रशोकार्तः शाहजहानस्तु दारापराजयं श्रुत्वैव गतप्राणः स्यात्" "न जाने आगरानगरे औरंगसैनिकाः किं कुर्युः "न जाने दाराशिकोहः कामवस्थां प्राप्तः स्यात्" इत्यादि ध्वनयः)

(९)

(करुण सङ्गीतम्)

दारा० : नादिरे,मार्गे त्वं यात्राकष्टाद् दिनानुदिनं खिन्ना लक्ष्यसे। भाग्यचक्रस्य गतिरेवंविधैव! केन चिन्तितमासीत् यत्

पिता पुत्रेण वन्दीकृतः स्यात् ! अयं नौ तनयः कुमारः सिपिहरशिकोहः समातृकः स्वदेशाद्दूरम् इमां कष्टदशामापन्नः स्यात् ! नादिरे !

नादिरा : नाथ !

दारा० : औरंगजेबस्य सैनिकाः मुलतान-सिन्ध-काठियावाड-गुजरातादिषु प्रदेशेषु मां निग्रहीतुकामा अनुधावन्ति। अस्मत्पार्श्वे पित्रा प्रदत्तं पर्याप्तं धनमस्ति। तत्सहिता ईरानशाहस्य पार्श्वं चलामः। सोऽस्माकं सहायतामाचरिष्यति।

नादिरा० : महाराज ! न जाने कियज्जीवनमवशिष्टमस्ति। यदि भवता साकं वनेऽपि स्वतंत्रतया जीवामि तर्हि सुखम् किन्तु ईरानशाहस्य गृहे गन्तुम् नेच्छामि ! तत्र तु पराधीनैरस्माभिः दासवृत्तिरंगीकर्तव्या स्यात्।

दारा० : तर्हि दादरं प्रति गच्छामः। तत्र मलिकजीवनखान-पठानोऽस्माकमातिथेयो भविष्यति। भवत्याः कृते विश्रामः परमावश्यकः। पुरा मलिकजीवनस्य मया प्राणा अपि रक्षिता आसन्। तेनावश्यमेव कृतज्ञेन भाव्यम्।

नादिरा० : महाराज ! प्रतिकूले हि विधौ कृतज्ञा अपि कृतघ्नतामाचरन्ति। यदा सहायकाः जयसिंह-जसवन्तसिंह-खलीलुल्लाखानप्रभृतयोऽपि प्रतिकूलाः संवृत्तास्तदा मलिकजीवनस्यापि आशा वृथैव क्रियते।

दारा० : प्रिये! भवत्याःकष्टमस्वास्थ्यं च वीक्ष्य अहं चिन्तयामि क्वचित्स्थातुम्। मलिकजीवनोऽस्माकं सहायतामवश्यमेव करिष्यति।

सिपहर० : तात ! मलिकस्तु दस्युरस्ति इति श्रूयते। स तु अस्माकं धनमेव हरिष्यति।

नादिरा० : दस्युः ? हा, तस्य गृहे कथमिव विश्रामं लप्स्ये ? भयंकराकृति : सः मृत्योरपि करालः स्यात्, देव! आधुना तु मृत्युरेव सौम्यतमो विश्रामहेतुः स्यात्। आः !

(मूर्च्छिता)

दारा० : अये मूर्च्छिता नादिरा। पुत्र सिपिहर ! इयं ते माता मूर्च्छिता ! प्रिये ! नेत्रे उन्मीलय। किन्तु मलिकजीवनाद्भीतासि ?

नादिरा० : देव ! भवान् मम विश्रामस्य कृते चिन्तित आसीत् ? ननु सत्यमेव विश्रामं करोमि, चिरविश्रामम् ! कष्टकाले भवन्तं परित्यज्य गच्छामि, क्षन्तव्यास्मि। मदीयः शवः स्वदेश एव, लाहौरे, प्रेषितव्यः स्यात्। गच्छामि, (हिक्काध्वनिः)

दारा० : प्रिये, किमिदम् ? पुत्र सिपिहर, ते माता गता। दाराशिकोह ! अधुना किमपरं द्रष्टुकामो जीवसि ? विधे !

सिपहर० : मातः (रोदनध्वनिः)।

(१०)

नजरबेगः : द्वारपाल ! आलमगीरं निवेदय नजरबेगस्त्वां द्रष्टुकाम इति।

द्वारपालः : क्षणं प्रतीक्षताम् (प्रतिनिवृत्य) आगच्छतु आलमगीरो भवन्तं द्रष्टुं प्रसीदति।

नजरबेगः : विजयताम् आलमगीरो महाराजः।

औरंगजेबः : नजरबेग। कः समाचारः ?

**नजरबेगः** : महाराज ! मलिकजीवनः, बहादुरखानः, मिर्ज़ाराजा जयसिंहः युवराजं दाराशिकोहं बन्दीकृत्य दिल्ली सीमानं प्रविष्टाः ।

**औरंग०** : अस्य शुभसमाचारस्य कृते भवते पुरस्कारः प्रदेयः। मलिकजीवनाय च तुष्टाः सन्तो वयं बख्त्यारखानोपाधि दद्मः । बहादुरखानः आज्ञप्तः स्यात् धर्मभ्रष्टवन्दिनां ख़वासपुराकारागारे कठोर-व्यवस्थां कर्तुम् ।

**नजरबेगः** : यथाज्ञापयति सम्राट् ।

**औरंग०** : सामन्ताः, वयं धर्मगुरूणां वशंवदाः स्मः। स्वधर्मविरोधिनो दुष्टस्य धर्मभ्रष्टस्य दाराशिकोहस्य वयमपमानं करिष्यामो येनायत्यां कोऽपि धर्मभ्रष्टो न स्यात् । ख़वासपुरावंदिनः शाहजहानाबादस्य राज-मार्गेषु सापमानं भ्राम्यन्ताम् येन समस्तमपि जगज्जानीयात् यद्वयं धर्ममार्गकंटकानि कथमिव उन्मूलयामः ।

**सामन्ताः** : युक्तं धर्मपालकस्य सम्राजो मतम् ।

(११)

(कोलाहलः)

**एको व्यापारी** : विपणिं नोद्घाटय मित्र ! किं न पश्यसि-औरंग-जेबस्याज्ञया दाराशिकोहः पुत्रेण साकं चांदनीचौक-मार्गेण सापमानमानीयते । सम्भाव्यते-राजपुरुषाः विपणिलुण्ठनमपि कुर्युः ! आगच्छ ! दाराशिकोहस्य दुर्दैवं पश्यामः !

**द्वितीयः** : हा हन्त ! दाराशिकोहः सापमानं वृद्धकरेणुपृष्ठ-मारोप्य आनीयते ! अरे नरपिशाचाः ! अस्य कुमारसिपिहरस्य को दोष आसीत् यत्सोऽपि पित्रा साकं दुर्दशां प्रापितः ।

('दाराऽऽ ! तवेदृशो विपरिणामः' 'हा हा ! सज्जनताया युग एव विलुप्तः'—इति ध्वनयः)

**प्रथमः** : ननु पश्यसि कृतान्तक्रूरं नजरबेगं यो हि नग्नकृपाणं गृहीत्वा करेणुपृष्ठे तिष्ठति ! मित्र ! को नाम औरंगजेबस्य निष्ठुरतां वीक्ष्य तस्य निन्दको न स्यात् ?

**द्वितीयः** : दम्भिनोऽज्ञानिनोऽधर्मान्धान् विहाय ! मानवतैकमूर्तिर्दाराशिकोहः सपुत्रः शिरस्त्राण-रहितः मलिनं जीर्णं वस्त्रं धारयति। स्थितप्रज्ञोऽसि दाराशिकोह ! स्थितप्रज्ञोऽसि ! यो ह्येवंविधमपमानं कष्टं च विषह्य जीवसि ! अरे ! कोऽयं प्रहरिभिर्निगृह्य दूरं क्षिप्यते ?

**प्रथमः** : अये ! अयं तु अवधूततपस्वी शर्मदः। दाराशिकोहस्य उपासकः उपास्यश्च ! हा हा ! मूर्च्छितः सन् कथमिव पुनरपि उत्थितः ! अस्येमां दशां वीक्ष्य दारा नेत्राभ्यामश्रूणि निर्गच्छन्ति ! शृणु, अधुना तु सः राजपुरुषानवमत्य किंचिदुच्चैर्वदति । आगच्छ शृणुमः !

(**शर्मदध्वनिः**—अरे नराधमाः ! औरंगानुयायिनः ! यूयं नररत्नं सहिष्णुमुदारं दाराशिकोहं किं तिरस्कुरुथ? अयं युष्माकमेव तिरस्कारः ! नातिचिरमेव एवम्भूतस्य शासनस्य उन्मूलनं भविता ! राजर्षे दाराशिकोह ! त्वामेवं विपन्नं वीक्ष्य कथमिव जीवनं धारयामि ?)

**द्वितीयः** : अये संवेदनशीलः शर्मदः पुनरपि मूर्च्छां गतः !

**प्रथमः** : अये मित्र ! इतः पश्य, अयमन्धपुरुषः उच्चैः किं भणति ? (उच्चैः स्वरेण ध्वनिः—'दारा ! दारा ! अद्य तव शोभायात्रा आयाति ! किमु त्वमद्य मह्यं न किमपि दास्यसि ? पूर्वं तु त्वं स्वर्णमुद्राः ददासि स्म ?")

**द्वितीयः** : अहो ! अयमन्धभिक्षुकोऽस्ति ! अनेन श्रुतं स्यात् यद् दाराशिकोहो हस्तिपृष्ठमारुह्य आयाति ! अयमधुनापि तं युवराजमेव मत्वा किंचित् याचते ।

**प्रथमः** : पश्य मित्र ! परमकारुणिको दारा स्वकीयं मलिनमेव कम्बलमवतार्य अन्धाय क्षिपति परं दारुणा राजपुरुषास्तमपसारयन्ति (राजपुरुषध्वनिः—'अपसर रे दाराभक्त ! नाद्य तस्य शोभायात्रा, स तु बन्दीकृत्य भ्राम्यते ।" अन्धध्वनिः—'हा हा ! तस्य बन्दीकारकः कोऽस्ति ?)

**द्वितीयः** : अरे इतः पश्य ! वलभीषु गृह-पृष्ठेषु च स्थिताः नार्यो नराश्च, राजमार्गतटयोः स्थिताश्च असंख्याः दर्शका वयमिव कष्टग्रस्ताः । एतेषां रोदनं कथमिवमाकर्णितं स्यात् !

(रोदनस्वरः)

**प्रथमः** : एते चानेकधर्मावलम्बिनो नराः समवेतस्वरेण आरंगज़ेबम् अपशब्दैर्लालयन्ति ।

(१२)

**औरंगज़ेबः** : आगच्छतु रोशनाराभगिनि ! मुमूर्षुः सन्नपि दारा उत्पातं करोति ।

**रोशनारा** : भ्रातः ! श्रुतं भवद्भिः ? प्रजा दारापक्षपातिनी ! अद्य मलिक़जीवनस्तया प्रस्तरैस्ताडितः । शर्मदोऽपि विद्रोहमुत्पादयति ! किन्तु चिन्ता नैव कार्या ! भवन्तो धर्मराज्यसंस्थापनाय बद्धपरिकराः सन्त्येव ! नूनं साफल्यमवाप्स्यन्ति ! अद्य रात्रावेव भवान् विशेषन्यायालये धर्मगुरूणां धर्माज्ञां गृह्णातु यया दारावधः क्रियेत ! यदि स जीवति तर्हि अस्माकं कृते नेदं शुभं लक्षणम् ।

**औरंग०** : यथा भणति भवती !

**औरंग०** : माननीया धर्मगुरवः ! मातुला शाइस्तख़ान-महोदयाः! मुहम्मदअमीनख़ान - बहादुरख़ान - तक़रुँबख़ान-दाऊदख़ान-दानिशमन्दख़ान - प्रभृतयः सामन्ताः ! वैदुष्यैकमूर्ति रोशनाराभगिनि च ! अद्य भवद्भिरतीव महत्त्वपूर्णो निर्णयः करणीयः स्यात् ! इदन्तु विदन्ति भवन्तः यद् दारा विधर्मी काफ़िरोऽस्ति ! स हि अस्माकं धर्मं भ्रंशयति ! अस्माकं धर्मस्यालोचनां करोति । काफ़िराणां नाशे प्रत्यूहमुत्पादयति ! मुहम्मदीयसन्देशस्यान्यथा व्याख्यां करोति ! अस्माकं धर्मसंगठने ह्रास्यबुद्धिं निबध्नाति । स तु मयूर-सिंहासनमधिरुह्य अस्माकं धर्ममेव विलोपयितुकाम आसीत् किन्तु दैवादद्य स निगृहीतोऽस्ति । भवन्तः सर्वेऽपि विविच्य कथयन्तु तस्य कतम उपचारः क्रियेत ।

**एको धर्मगुरुः** : प्रथमं तु तस्य शर्मदस्य चिकित्सा करणीया यो हि प्रजासु विद्रोहवीजं वपति । तस्मै मृत्युदंडो देयः स्यात् ।

**द्वितीयोधर्मगुरुः** : प्रथममुपस्थितविषये निर्णयः स्यात् । पश्चात् शर्मदादेशचर्चा स्यात् ।

**दानिशमंदखानः** मम मते तु सपुत्रो दाराशिकोहो वंदीकृत्य ग्वालियर दुर्गे स्थापितः स्यात् । यथा मुरादवख़्शादयः अनेके राजपुत्राः संस्थापिताः सन्ति ।

**औरंगजेबः** : रोशनाराभगिनि, ! किमु भवती दानिशमंदखान-मतम् गृह्णाति ।

**रोशनारा** : दारा विधर्मी अस्ति ! स हि धर्मभ्रष्टः अस्ति । इस्लामधर्मेण साकं तस्य कोऽपि संबन्धो नास्ति । तेन केशवरामादिहिन्दूमन्दिराणां कृते विपुलं धनं

समर्प्य राजकोशव्य दुरुपयोगो विहितः। स हि "अल्लाह" शब्दस्य स्थाने "प्रभु शब्दं" स्व मुद्रिकायां अंकितम् कारितवान्। स हि धर्मविरुद्धं मूर्ति-पूजनम् चकार। मौहम्मदीयसंदेशमुपजहास। अस्माकं धर्मगुरुमौलवीषु कटाक्षनिक्षेपं चकार। काफिरेभ्यो बहुवित्तं दत्तवान्। विधर्मिणां धर्मग्रन्थान् फारसीभाषायामनूदितवान्। स्वधर्मोक्तव्रतादिपालने उपेक्षाबुद्धिं बबन्ध। किमधिकम् ? मन्मते तु यथा हि मंसूरः शूलामारोपित आसीत्तथैवायमपि स्यात्।

**दानिशमन्दखान** : महाराज! मन्मते तु मृत्युदण्डः कठोरः। कारावास-दण्ड एव युक्तः स्यात्। मृत्युदण्डे प्रजासु क्रान्तिः सम्भाव्यते।

**रोशनारा** : दानिशमन्दखान! भवान् स्वमतं स्वपार्श्वे एव रक्षतु। कर्तव्यपरायणस्य नृपस्य कर्तव्यमस्ति विधर्मिणामुच्छेदः, दुष्टानां च नाशः। किं निमित्तं भ्रष्टधर्ममार्गो विधर्मी जीवितुमनुमतः स्यात्? एकेन मत्स्येन तडागः कथमपवित्रीक्रियेत? यदवधि दाराशिकोहस्य शिरः पृथिव्यां सुरक्षितमस्ति तदवधि अधर्म एव पृथिवीं कलंकयिष्यति।

**धर्म०** : यथा भगिनी रोशनारा भणति तथैव साधु। दारा-शिकोहाय मृत्युदण्डो विहितः स्यात्।

**औरंग०** : यथा सर्वेभ्यो धर्मगुरुभ्यो रोचते। अहं तु धर्मस्या-नुचरोऽस्मि। विदुषां विचाराणां पालनं मम कर्तव्यम्। अतोऽहं दाराशिकोहस्य मृत्युदण्डमुद्घोषयामि।

**रोशनारा** : महाराज, अत्रैव मृत्युदंडघोषणं न पर्याप्तम्। श्वः सर्वसाधारण - सभायामस्योद्घोषणं स्यात्। दानिशमन्दखान! वयमाशास्महे यद् भवान् श्वोऽस्माकं निर्णयघोषं साधु मंस्यते। मातुलशाइस्त-

खान-खलीलखानौ द्रक्ष्यतः समस्तमपि न्यायालय-कार्यं सम्यक् चलतीति। यदि कश्चिदपि क्रान्तेः स्वप्नं पश्यति तर्हि श्वः तस्य धारणा नष्टा स्यात्। शिरः कर्तनं तस्यापि विधेयं स्यात्। धर्मराज्यस्य इयमेव व्यवस्था।

(१३)

**उद्घोषकः** : अवहिता भवन्तु। विश्वनियन्तारः धर्मरक्षकाः आलमगीर - ज़िन्दापीर - औरंगजेब - महाभागाः सभायामागच्छन्ति।

**ध्वनिः** : ('भ्रातृघाती धर्मध्वंसी आयाति' 'शनकैः वद अन्यथा तवापि शिरःकर्तनं भविता' इत्यादि शनकैः ध्वनिः)

**औरंग०** : यथा भवन्तः सर्वेऽपि जानन्ति, अद्य एकोऽतीव महत्त्व-पूर्णो निर्णयः करणीयः। यो दुर्भाग्यात् मम भ्राता, स राजद्रोही, धर्मद्रोही दाराशिकोहो निगृहीतः। तस्य अपराधानां को दंडः स्यात् इति विषये धर्मगुरूणां मौलवीमहोदयानां धर्माज्ञा पालनीया अस्माभिः। एवमेव वयं प्रजां सन्मार्गं नेतुं क्षमाः। काज़ीमहोदयाः! धर्मगुरूणां धर्माज्ञाम् सभायामुच्चैः पठन्तु।

**काजी** : राजकुमारो दाराशिकोहः धर्मदूषकोऽस्ति। तस्य सर्वा अपि क्रियाः इस्लामधर्मविरुद्धाः सन्ति। अतः धर्मगुरूणां धर्माज्ञा दाराशिकोहाय मृत्युदंडं व्यवस्था-पयति। अयमेवान्तिमो निर्णयः।

('ओः काजीमहोदयो मूर्च्छितः', 'चिकित्सकस्त-मुत्थापयति' 'अये दानिशमन्दखानो वक्तुमुत्थितः' इतिशनकैः ध्वनिः)

**दानिशमन्द०** : क्षम्यताम् महाराजः। यद्यपि दाराशिकोहो मम शत्रुरस्ति किन्तु मृत्युदंडः तस्मै अनुचितः। यदि सः परधर्माणां सम्मानेन धर्मभ्रष्टः कथ्यते तर्हि तु महते मुगलनायकाय अकबराय, ज्ञानिने अबुलफ़जलाय,

फैज़ीमहोदयाय चापि धर्मभ्रष्ट'मुलहिद' संज्ञा प्रदीयेत, तेषां शवाः पृथिवीगर्भात् निष्कास्य शूलारोपिता क्रियेरन् ।

**औरंग०** : दानिशमन्दखान ! अलं वहु जल्पितेन । अकवरादीनां तुलनां दाराशिकोहेन साकं करोषि ? धर्मप्राणां प्रजां कुमार्गं नेतुमिच्छसि ? इयं हि अस्माकं प्रजा धार्मिकी अस्ति या कस्यापि विमूढस्य वावदूकस्याग्रे विवेकशून्या न भवति । एवं कदापि विवेकशून्यता न प्रदर्शनीया । तूष्णीं तिष्ठतु । अधुना सभा विसर्ज्यते । धर्मगुरूणामाज्ञास्माभिरक्षरशः पालनीया । नजरवेगस्य नैतृत्वे शफीखानो दाराशिरः कर्तयिष्यति ।

(हाहाकारः कोलाहलः)

(१४)

(खवासपुराप्रकोष्ठः)

**दाराशिकोहः** : वत्स सिपहरशिकोह ! नयनतारक ! मन्दभाग्येन मया साकं तवापि जीवनं सकष्टं संवृत्तम् । हन्त ! शिरीषकोमलस्त्वं निगडवद्धोऽसि ? तव कोमलपादपद्मयोर्लौह श्रृंखला दुनोति मम मानसम् ।

**सिपिहर०** : तात ! संसारस्य गतिर्विचित्रा । किमेवं कातरोऽस्ति भवान् ? भवानेव तु गीतायाः श्लोकं श्रावयति स्म—'सुखःदुखे समे कृत्वा लाभालाभौ जयाजयौ ।'

**दारा०** : ओः ! मम हृदयखंड ! क्वेदं वयः क्व च परिणतवयसि प्राप्तव्यं ज्ञानम् ?

**सिपहर०** : तात ! भवता किमपि न भुक्तम् । मदीयौ चरणावेव तु निगडवद्धौ, हस्तौतु स्वतंत्रौ । अहं किंचित्सूपादिकं निष्पाद्य आनयामि ।

**दारा०** : नयनालोक ! अद्य वा श्वो वा आत्मा शरीरं त्यक्ष्यत्येव । अधुनास्य शरीरस्य चिन्ता वृथैव । अधुना तु परीक्षितेन इव मया ईश्वरचिन्तनं करणीयम् ।

सिपहर० : तात। शरीरमाद्यं खलु धर्मं साधनम्—इमां पंक्तिं तु भवान् श्रावयति स्म यदाहं भोजनादिकं सुव्यवस्थितं न गृह्णामि स्म। अधुना भवानेव बुभुक्षाकुलं शरीरं धारयति।

दारा० : पुत्र ! ज्ञानमयकोषे स्थितस्य आत्मनोऽन्नमयकोषस्य चिन्ता न भवति। आत्मनः कृतेऽहं न किमपि शोचामि। किन्तु तव जीवनं शोचामि। वत्स ! तव माता अनाथेव मृता, तव पिता बन्दी अस्त्येव, तव पितामहो वार्द्धके पुत्रेण वन्दीकृतः, तव पितृश्वसा जीवनपर्यन्तम् एकाकिनी एव कुण्ठितं जीवनमनुभूय अधुना बन्दीभूता। अधुना त्वहं स्वजीवनं भारभूतमेव मन्ये। धन्याः सन्ति मुनयो ये पराभिसन्धानं राज्यादिकं परित्यज्य सानन्दं जीवनं यापयन्ति।

सिपहर० : ननु आवामपि तु मुनय इवैव संवृत्तौ। एकान्तवासः, भूमिशयनादिकम्, ईश्वरचिन्तनम्, सर्वमपि तु मुनितुल्यमेव। अधुनाहं सूपं निष्पादयामि पुनश्च भवते भोजनं दास्यामि।

(प्रविश्य)

नजरबेगः : भोजनं तु मृत्यवे देयं स्यात्।

दारा० : नजरबेग ! किमु भवान् मम वधार्थमागतः ? शफीखान ! किमु एवमेम ?

सिपहर० : पितः ! (वक्षसि लग्नः)

शफीखानः : न वयं किमपि जानीमः। भवतां पुत्रो भवद्भ्योवियोजनीयः स्यात्—इति सम्राज आज्ञा। उत्तिष्ठ रे सिपहर ! किमेवं वक्षसि लग्नः ? उत्तिष्ठसि न वा ? किं कुक्कुरवत् कर्षणीयोऽसि।

सिपहर० : पितः ! (रोदिति)

दारा० : अरे नरपिशाचाः ! भवतां कृत्यं विलोक्य तु मदीयः आसन्नो मृत्युरपि अश्रूणि मुंचति। पुत्र सिपहर ! गच्छ अपरस्मिन् कक्षे गच्छ।

(अपरकक्षे—'पितः' 'अरे गच्छति तव पिता मृत्युमुखम्' इति ध्वनिः)

दारा० : अधुना ममान्तसमयः समागतः। आत्मा परब्रह्मणि यियासुः। किन्तु वीरगतिं समाश्रयिष्ये। क्षत्रियरक्तं वर्तते मम शरीरे। इदमुपधानस्थितं लवित्रम्। इदमेव मम शस्त्रम्—

**यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम्।**
**सुखिनः क्षत्रिया पार्थ लभन्ते युद्धमीदृशम्।**
**अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि।**
**ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि।**

वधिकः : (प्रविश्य) संन्यासिन् दाराशिकोह ! इष्टं स्मर। अयमद्य स्वपरमात्मनि विलीनो भवसि।

दारा० : वधिक ! म्रियमाणोऽस्मि। किन्तु वीरगत्या। गृहाण पुरस्कारम्।

(लवित्रं वक्षसि करोति)

वधिकः : आः ! मृतोऽस्मि।

दारा० : (स्वगतं) अरे लवित्रं तु अस्य वक्षस्येव विलग्नम्। नैव वहिरागच्छति। अरे शस्त्रविहीने प्रहारं कुरुथः ?

नजरवेगः : दारा ! अधुना नीतिशिक्षां मा देहि। इदं तव शिरः स्कन्धात् पृथक्क्रियते। शफीखान ! प्रहारं कुरु।

(खड्गध्वनिः)

(१५)

(औरंगजेबस्य 'दीवाने खास' भवनम्)

प्रहरी : आलमगीराः ! विश्वनियन्तारः ! महाराजाः ! नजरवेगः दाराशिरो गृहीत्वा समागतः।

औरंग० : प्रवेशयैनम् ।

नजरबेग: : (प्रविश्य) महाराज ! इदं दाराशिर: श्रीमतां सेवायां प्रस्तुतम् । म्रियमाणेनापि तेन भवतामेको वधिको लविन्नप्रहारेण व्यापादितः। भवदाज्ञया अस्माभिः सिपहरोऽन्यत्र स्थापित:।

औरंग० : एतच्छिरः प्रक्षालितं स्यात् ।

नजरवेग: : यथाज्ञापयन्ति सम्राज: । (तथाकरोति) इदं प्रक्षालितं शिर: ।

औरंग० : आ: धर्मभ्रष्ट ! मया तव मुखं न कदापि द्रष्टुमिष्टम् । धर्मभ्रष्टस्य मुलहिदस्य तव तु मृत्यु: पूर्वमेव आवश्यक आसीत् किन्तु धर्मतत्पराणाम् दौर्भाग्यात् त्वमधुनावधि जीवितः। अधुना त्वया धर्मविरोधस्य दंड: प्राप्तः । रोशनाराभगिनि ! पश्यसि विधर्मिनरमुण्डम् ?

रोशनारा : विधर्मी सर्वेषामपि पापानां फलं प्राप्तवान् । अधुना भवान् धर्मराज्यं निष्कंटकं संस्थापयतु। धर्मराज्यस्य विघ्न: प्रशान्तः।

औरंग० : (उच्चैः) दूरे कुरुध्वं मुंडमिदम् । मह्यं कष्टं ददाति इदम् ।

रोशनारा : कथं ? किं कष्टं ? पापी स्वर्गति प्राप्तः ।

औरंग० : भगिनि ! स: पापी आसीत् इति मम दुराग्रहस्यैव मतम् ।

(मूर्च्छितः)

रोशनारा : भ्रातः ! किम् मूर्च्छितः ? अरे ! क: कोऽत्र भोः ! चिकित्सक: आहूयताम् ।

औरंग० : हा: भ्रात: ! दुर्भाग्यशील सहोदर, त्वं गतः ! राज्यसलत्तालोलुपेन मया त्वं मारितः । किन्तु यशसा त्वं जीवसि । त्वं कुशलराजनीतिज्ञो नासीः, किन्तु त्वं

महान् मानव आसीः । त्वया कदापि भ्रातृरक्तेन करौ नैव रक्तौ, त्वया कदापि पिता तर्पितो नैव तापितः त्वया कदापि नैसर्गिकभावनासु कृत्रिमभावनाः न स्थापिताः, तव धर्मः कर्मकांडो नासीदपि तु मानव-कल्याणमेव । महामानव ! क्षम्यताम् । अयमौरंगजेव-स्तव शिरोहर्ता तव अनुजः, क्षमां याचते ।

**रोशनारा** : भ्रातः ! किमसम्बद्धं भाष्यते ? किं संज्ञाशून्यो भवान् ? चिकित्सकमहोदय । किमु उन्मादग्रस्तो भ्राता ?

**चिकित्सकः** : अयमहं परीक्षे !

**औरंग०** : दाराः त्वं मृत्वापि यशसा जीवसि । अहं जीवन्नपि अकीर्त्या मृतः । दारा……

(गंभीर संगीतम्)



# चक्रानुसरणम्

(ध्वनिनाटकम्)

प्रणेता :

डा० रमाकान्त शुक्लः

# पात्राणि

### पुरुषपात्राणि

१. ध्वनिः
२. विह्लणः
३. प्रहरी
४. सारथिः
५. अमात्यः
६. राजा (मदनाभिरामः)
७. कोपपालः
८. जनाः
९. प्रहरिणः

### स्त्रीपात्राणि

१. यामिनीपूर्णतिलका
२. वेत्रवती
३. राज्ञी

डा० रमाकान्तशुक्लप्रणीतं

# चक्रानुसरणम्

## (ध्वनिनाटकम्)

(गम्भीरसंगीतकानन्तरं कर्कशगम्भीरः स्त्रीध्वनिः सप्रतिध्वनिप्रभावं श्रूयते।)

ध्वनिः : अहं नियतिरस्मि ! मद्रथचक्राणाम् उच्चावचस्थित्या विश्वमिदं परिवर्तते। इदं गीतम् (गीतध्वनिः) इदं च क्रन्दनं (क्रन्दनध्वनिः) अयं पञ्चवाद्ययुतः प्रासादः (शहनाई-नफीरीवादनम्) इदं च कुक्कुरशृगालवेतालाकीर्णं श्मशानम् (कुक्कुरशृगालरोदन-वेतालाट्टहासध्वनिः), अयं विवाहः (मन्त्रध्वनिः) इदं च मरणम् (रोदनध्वनिः) इदं निर्माणं (श्रमिकाणां समवेतध्वनिः मिक्सरध्वनिः) अयं च ध्वंसः (बुलडोज़रैर्भवन-पातनादिध्वनिः), इदं यन्त्रोद्योगकलानिकेतनादिकम् (यन्त्रालयाणां ध्वनिः, सायरनध्वनिः); इदं च श्वापदाकुलितमरण्यम् (सिंहादिध्वनिः), इदं प्राकृतिकं रामणीयकम् (कोकिल-नदी-चटकादिध्वनिः) इयं च प्रलयक्रीडा (घनगर्जन-भूकम्प-झंझावातादिध्वनिः) —सर्वमपि मद्रथचक्राणामेव लीला! (रथचक्रघर्घरस्वरः) अहं नियतिरस्मि ! चिरंजिजीविषूणां मृत्युं मुमूर्षूणाञ्च जिरञ्जीवित्वम्, धनाढ्यानां दारिद्र्यं दरिद्राणां च कुबेरत्वम्, सुरूपाणां कुरूपत्वं कुरूपाणां च सुरूपत्वं, महतां लघुत्वं लघूनां च महत्त्वं, विजेतॄणां विजितत्वं पराजितानां च जेतृत्वं, अहंकारिणां दीनत्वं दीनानां चाहंकारित्वं, नृपाणां रंकत्वं रंकाणां च नृपत्वं, शासकानां बन्दित्वं बन्दिनां च शासकत्वं विषस्यामृतत्वममृतस्य

च विषत्वं सम्मानितानामपमानम् अपमानितानां च सम्मानमहं यदृच्छया विदधामि ! जगतः सर्वोऽपि क्रियाकलापो मद्रथचक्राणामनुसरणमेव ! (रथचक्रघर्घरस्वरः) व्यर्थं वदन्ति जनाः—यत्कर्माणि भाग्यहेतवः; यथार्थं भणाम्यहम् यदहमेव कर्महेतुः (साट्टासं) हा हा हा ! अहं नियतिः, अहं विधिः, अहं दैवं अहं दिष्टम् ! अहं स्त्री, अहं पुमान् अहं नपुंसकम् ! हा हा हा—(विलीयते) मत्कथने श्रद्धधानैर्भाव्यामेव सर्वैः। ननु पश्यन्तु इमं विल्हणं यः पुरा राजसम्मानं लब्धवानद्य च राजकोपशरव्यः सन् वध्यभूमिं नीयते।

**विल्हणः :** (स्वगतम्) नियतिचक्रस्य गतिरपि विचित्रा अस्ति! प्राणिना तच्चक्रस्य अनुसरणमवश्यमेव कर्तव्यं भवति ! भाग्यं हि, न जाने, कदा सधनं निर्धनं कुर्यात्, सबलं निर्बलं कुर्यात् सुरूपं कुरूपं कुर्यात् संभावितं च अपमानितम् कुर्यात् इति न केनापि वक्तुं शक्यते, कर्ममार्गानुयायिनोऽपि भाग्यचक्रमनुसरन्तो भाग्यमेव सर्वोच्चत्वेन अंगीकर्तुं विवशाः भवन्ति। (निःश्वस्य) अद्य अहं कोपपालादिष्ट-प्रहरिभिः परिवृतः सापमानं वधस्थलं नीयमानोऽस्मि ! अद्य मार्गस्थाः जनाः मदीयां दशां विलोक्य कथमिव शोचन्ति ! कश्चित् मामुपहसति, कश्चित् सहानुभूतिं प्रदर्शयति, कश्चित् मदीयां निर्भयशान्तमुद्रां शंसति। किञ्चित्कालानन्तरमेव मदीयं शिरः स्कन्धात्पृथग्भविता। अहो भाग्यचक्रम् ! कदाचिदेते जनाः मामभिनन्दितुं राजमार्गस्य उभयपार्श्वयोः एकत्रिताः अभूवन्, एते च प्रहरिणो मम सम्मानार्थं विशालजनसमुदायमपसारयन्तः प्राचलन्, किन्तु अद्य तु विपरीतमेव ! लोका हसन्ति, प्रहरिणश्च मां निगृह्य वधाय नयन्ति !

**प्रहरी :** विल्हणपण्डित ! शीघ्रं चलतु ! एवं मन्दगत्या तु वरयात्रायां गम्यते ! ननु वधस्थानं नीयमानो भवान्। अधोमुखः सन्

किं शोचति ? ननु मुखं तु दर्शयतु सर्वेभ्यः स्वप्रशंसकेभ्यो दर्शकेभ्यः ?

**विल्हणः** : ओः! (स्वगतम्) अद्य अयं प्रहरी अपि ममोपदेष्टा संवृत्तः यो हि पूर्वं मम आज्ञाकर आसीत् ! स्मरामि ननु तद्दिनम् यदा अस्यैव पाञ्चालदेशचूडामणिभूतस्य लक्ष्मीमन्दिर-नगरस्य राजमार्गे एतादृशैः अनेकैः प्रहरिभिः मद्रथमार्गे जनापसरणं कृतम् ! यदा च मदनाभिरामनृपतिना सादर-माहूयमानोऽहमस्मिन् नगरे संप्रविष्टः—...

(पूर्वदीप्ति (फ्लैशबैक)पद्धत्या दृश्यान्तरम्)

(रथध्वनिः श्रूयते)

**प्रहरिणः** अपसरन्तु, मार्गं ददतु । (रथध्वनिः)

**जनाः** : स्वागतम् कविपुङ्गवस्य, अभिनन्दनं कविललामस्य (रथध्वनिः)

**सारथिः** : पण्डितवर ! इदं राजभवनम् । एते च भवदभिनन्दनोत्सुका राजपुरुषास्तिष्ठन्ति । प्रधानामात्योऽपि भवन्तं प्रत्युद्ग्रहीतुं तिष्ठति । ('अये ! विल्हणपण्डितः सम्प्राप्तः' इति ध्वनिः । राजपुरुषानां कलकलः)

**अमात्य** स्वागतं कविशिरोमणेः विल्हणपण्डितस्य ! वेत्रवति ! कवि-पुङ्गवं मार्गं दर्शय । देवः सौत्सुक्यं प्रतिपालयति एनं महानु-भावम् ।

**वेत्रवती** : इत इतः कविपुङ्गवः । (गमनध्वनिः) इदं राजभवनम् ।

(फ्लैशबैकसमाप्तिः)

राज्ञा च मह्यमभिनन्दनं व्याहृतम्—

(पूर्वदीप्ति (फ्लैशबैक) पद्धत्या दृश्यान्तरम्)

**राजा** : स्वागतं विल्हणपण्डितस्य ।

**विल्हणः** : जयतु महाराजः !

**राजा** : विल्हणपण्डित ! अस्माभिः भवतोऽतीव प्रशंसा श्रुता ! अद्य भवन्तं वीक्ष्य मुदितमुताः स्मः ।

विल्हण: : कृतज्ञोऽस्मि ।

राजा : पण्डितप्रवर ! मदीया कन्यास्ति-यामिनीपूर्णतिलका। तया व्याकरणमधीतम्, सर्वाः कला अपि तया अधिगताः. संगीतनैपुण्यम् चापि तया लब्धम् ।

विल्हण: : ननु अनुरूपमेव सर्वमपि राजकन्यकायाः ! भवतु ।

राजा : अधुनां तां काव्यनिपुणां कर्त्तुमिच्छामि । न हि साहित्यशिक्षां विना जीवनं सफलं भवति । तिष्ठतु चेत् किमपि धन-वैभवं जनस्य पार्श्वे, विलसतु चेत्किमपि रूपयौवनसम्पन्नत्वम्, अस्तु चेत्किमपि कुलीनत्वम्, किन्तु साहित्यशिक्षां विना तस्य जीवनं निरर्थकमेव! काव्यामृतस्य अभ्युपगमाय जनेनावश्यमेव प्रयत्नशीलेन भाव्यम् । कस्मिन् क्षणे कस्मिन् स्थानेऽस्माभिः कथमिवाचरणीयम्—इति काव्यानुशीलनमेवास्मभ्यं दिशति । काव्यशिक्षामुपलभ्य मन्ये, जनः दुर्व्यसनेषु उपेक्षाबुद्धिं बद्ध्वा समाधौ तिष्ठति । काव्यामृतं पीत्वा च सः वेद्यान्तरस्पर्शशून्यतामनुभवति ! काव्यं हि लोकमङ्गलकारीणि कर्माणि कर्तुं जनं प्रेरयति। भवान् कविरपि अस्ति, पण्डितश्चापि। भवान् मम कन्यकायै काव्यशिक्षां ददतु इत्यस्मत्प्रार्थना ।

विल्हण: : शुभः कल्पः। यदि सा काव्यशिक्षां जिघृक्षति-तदावश्यमेव दास्यामि ।

राजा : पण्डितवर ! किन्तु कष्टकर एको वृत्तान्तः ।

बिल्हण: : कः सः ?

राजा : दौर्भाग्यात् मम सुता कुष्ठिनी अस्ति ! इदं कथ्यते—'रूपयौवनसम्पन्नाः विद्याहीनाः न शोभन्ते' किन्तु अहं चिन्तयामि—'विद्यासम्पन्नाः रूपहीना न शोभन्ते ।' मन्ये यामिनीपूर्णतिलका सा मम सुता नामसाम्यात् यामिनीपूर्णतिलकात् चन्द्रादेव श्वेतिमानमग्रहीत् !

विल्हण: : कष्टम् ! किन्तु अहं चिन्तयामि-यदि सा साहित्य-सङ्गीतकलाः स्वजीवने धारयति तदा सा एकाकिन्यपि

स्वं जीवनं ससुखम् गमयितुमीशा साहित्यामृतसिन्धौ निमग्ना सा स्वकुष्ठपीडां न ज्ञास्यति। भवता युक्तं चिन्तितं यद्भवान् तस्यै काव्यशिक्षां दापयित्वा तस्या जीवनं चिन्तामुक्तं कर्मठं च विधातुमिच्छति।

राजा : कविवर ! अतीव कष्टकरं संवृत्तम् ! मया तु दैवज्ञमुखाच्छ्रुतं वर्तते यत्कुष्ठिन्या मुखं भवता कदापि न द्रष्टव्यम् ! यदि भवान् कदापि कष्ठिन्या मुखं द्रक्ष्यति तदा भवतो विद्यया साकं नेत्रयोर्ज्योतिरपि विलुप्तं भविष्यति। अप्येतस्यामवस्थायां मत्सुतापाठनं भवान् अनुमनुते ?

विल्हणः : राजन् ! किमु कुष्ठिजीवस्य संवेदनशीलं हृदयं न भवति ? किमु तस्य बुद्धिर्न भवति ? किमु तत्र जिज्ञासा नैव भवति ? किमु तत्रोत्साहो न भवति ? यत्तस्मै विद्यादानं न कर्तुं शक्यते। ईश्वरेण स जनो दण्डितः, ईश्वरांशैरस्माभिस्तु स न दण्डनीयः। रोगिणां कृते तु अत्यन्तमेव सदयेन सहृदयेन च भाव्यम् प्राणिना, विशेषतः कविना।

राजा : कविवर! युक्तं भणति भवान्। किन्तु प्राणिनां जीवनदर्शनं विविधम्। केचित् जगति व्याप्तं कष्टमेवोन्मूलयन्तः स्वजीवनं सार्थकं मन्यते, केचिच्च जगति विप्रकीर्णं विभूतिमत् श्रीमत् सौंदर्यमेव द्रष्टुकामाः सौन्दर्योपासनया ईश्वराराधनं कुर्वन्तः कालं यापयितुकामाः भवन्ति, अपरे च विघ्नानां जयं चिकीर्षवः सर्वदा कर्ममार्गमनुधावन्ति। प्रायः कवीनां जीवनदर्शनानुसारेण सौंदर्योपासनैव युक्ता श्रूयते। मम च कन्या नास्ति सौन्दर्योपेता।

विल्हणः : राजन् ! यद्यपि कवयः "यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा। तत्तदेवावगच्छ त्वं, मम तेजोऽशसम्भवम्।" इति वचनानुसारमुदात्तवस्तुष्वेव आदरं निदधति तथापि मानवीयभावनां ते सर्वोच्चत्वेन मन्यन्ते। अस्तु ! राजन् !

एक उपायः सम्भाव्यते येन दैवज्ञकथनमपि रक्षितं स्यात् भवत्सुताया अध्ययनमपि स्यात् ।

राजा : कः सः ?

विल्हणः : दैवज्ञेन ! मत्कृते कुष्ठिन्या अदर्शनमेव तु निर्धारितम् ?

राजा : आम् !

विल्हणः : कुष्ठिना साकं भाषणं तु अनुमन्यते दैवज्ञः ?

राजा : दर्शनं विना भाषणं कथमिव सम्भाव्यते ? यदवधि चेष्टादिवैशिष्ट्येन संवलितं भाषणं न साक्षात्क्रियते तदवधि भाषणस्य किमौचित्यम् ? रूपं विना शब्दस्य किं रामणीयकम् ? दर्शनस्य वैशिष्ट्यं लक्षयद्भिरेव मनीषिभिः 'काव्येषु नाटकं रम्यम्' इति निर्धारितम् । दृष्टव्यक्तेरेव भाषणं प्रभावशालि । अस्तु । भवान् कमुपायं निर्दिशति ?

विल्हणः : अहमध्यापनकाले नेत्रे निमील्य स्थास्यामि ।

राजा : इदन्त्वतीव दुष्करम् । ओः, अभ्युपगत उपायः ।

विल्हणः : कः सः ?

राजा : अहं द्वयोरपि भवतोः मध्ये काण्डपटं व्यवस्थापयिष्यामि । काण्डपटस्य एकतो भवान् स्थास्यति अपरतश्च मम सुता । भवान् कुष्ठिदर्शनेन अन्धतां न प्राप्स्यति सा च भवद्वाणीनिर्गतं काव्यामृतं भवद्बुद्धिवैभवनिर्गलितं काव्यशास्त्रज्ञानं च लप्स्यते ।

विल्हणः : सुष्ठु चिन्तितो भवद्भिरुपायः ।

राजा : पुनश्च, काण्डपटव्यवस्थायां सञ्जातायामपि कन्यामुखादर्शनार्थं दीपरहिते स्थाने प्रदोषवेलायामेव अस्माभिः अध्यापनस्य व्यवस्था विधास्यते । इदानीं भवान् मम सुताया पठिनमङ्गीकर्तुमर्हति । एतेनोपायेन द्वयोरपि कुशलं स्यात् ।

विल्हणः : यथा रोचते भवते ।

(फ्लैशबैकसमाप्तिः)

एवं च राज्ञा बहुमानितः सन् कौशेयवसनयुगलेन च पूजितः सन् अहं

राजसभाभवनादागत्य तां रात्रिं स्वावासस्थले व्यतीताय। आगामिनि च दिवसे सायंकाले अदृश्या शिष्या पठितुं समागता। मदीयावासैकदेशेऽध्ययनस्य व्यवस्था जाता। अध्ययनस्थले काण्डवस्त्रं व्यवस्थापितामासीत्। विचित्रमेवासीदिदमध्यापनं यत्र गुरुःशिष्यायाः प्रणामचेष्टां नविलोकयितुमीश आसीत् यत्र च गुरोः अभिव्यक्तिप्रियं चेष्टासमूहं शिष्या न द्रष्टुं प्रभुरासीत्। एकतः प्रहरिणा ससम्मानमहमध्ययनस्थाने नीतोऽभवम्। अपरतश्च राजकुमारी माम् प्रतोक्षमाणा तिष्ठति स्म !

(फ्लैशबैकपद्धत्या)

**प्रहरी :** कविवर! राजकुमारी पठितुं समागता ! कृपया अध्यापनपीठं सनाथ्यताम्।

**बिहलणः :** एवंभवतु। राजकुमारि! अहमध्यापयितुं सज्जोऽस्मि।

**राजकुमारी :** प्रणमामि पण्डितवरम्।

**विल्हणः :** कल्याणि ! शुभं भूयात्। भवतीं द्रष्टुमीशो नास्मि-इति दूनहृदयोऽस्मि।

**राजकुमारी :** भगवन् ! भवन्तं साक्षात्प्रणामदानेन उपस्थातुं असमर्थाऽस्मीति क्षन्तव्यास्मि।

**विल्हणः :** कल्याणि ! भाग्यचक्रस्यैवमेव गतिः ! अस्तु ! किं पठितुकामा भवती ?

**राजकुमारी :** भगवन् ? काव्यं कर्तुं विचारयितुं चेच्छामि।

**विल्हणः :** अतीव महान् भारः सोढव्यस्तदा तु आवाभ्यां द्वाम्यामपि। कल्याणि ! कवित्वम् अत्यन्तं दुर्लभं भवति। ईश्वरदत्तप्रतिभया सम्पन्न एव प्राणी कवितां कर्तुं विचारयितुं च शक्नोति। व्युत्पत्या अभ्यासेन च तस्य प्रतिभा वर्धते, काव्यं चोद्गीर्यते। न तज्ज्ञानमस्ति, न तच्छिल्पमस्ति, न सा विद्यास्ति, न सा कलास्ति यत्र काव्याङ्गत्वं न तिष्ठति। महाराजः कथयति स्म यद्भवती सङ्गीतं सम्यक् जानाति। साहित्यं प्राप्य भवत्याः स्वरलहरी अत्यन्तमेव सार्थका स्यात्।

**राजकुमारी :** भवत्कृपया !

**विल्हणः :** राजकुमारि ! अद्य प्रथमं मङ्गलाचरणं तदनु कवेर्माहात्म्यं च भवत्या पठनीयं, बोद्धव्यं, श्रावणीयं च स्यात् ।

**राजकुमारी :** यथाज्ञापयति भवान् ।

**विल्हणः :** प्रथममहं मङ्गलमाचरामि, तदनु भवत्याचरणीयम् !

वचांसि वाचस्पतिमत्सरेण साराणि लब्धुं ग्रहमण्डलीव ।
मुक्ताक्षसूत्रत्वमुपैति यस्याः सा सप्रसादास्तु सरस्वती वः!

**राजकुमारी :** (विल्हणसहायतया पठति सस्वरम्)

**विल्हणः :** साधु ! पुनरपि पठनीयम्

यस्य स्वेच्छाशवरचरितालोकनत्रस्तयेव
न्यस्तश्चूडाशशिकलिकया क्वापि दूरे कुरङ्गः ।
स व्युत्पत्ति सुकविवचनेष्वादिकर्त्ता श्रुतीनां
देवः प्रेयानचलदुहितुर्निश्चलां वः करोतु ।।

**राजकुमारी :** (विल्हणसहायतया पठति)

**विल्हणः :** शोभनम् ! राजकुमारि ! कवित्वं नृपत्वादपि वरतरम् ! राजा स्वदेशे पूज्यते, कविश्च सर्वत्र सर्वदा च पूज्यते ! यदि कवयो नाभविष्यन् तर्हि नृपतीनां नामापि कश्चिन्न गृह्णीयात् ।

पृथ्वीपतेः सन्ति न यस्य पार्श्वे
कवीश्वरास्तस्य कुतो यशांसि ?
भूपाः कियन्तो न बभूवुरुर्व्यां
जानाति नामापि न कोऽपि तेषाम् ।।

**राजकुमारी :** अतीव शोभनो भावः ।

**विल्हणः :** पठतु भवत्यपि मया साकम् (पुनरावर्तयति पृथ्वीपतेः)

लङ्कापतेः संकुचितं यशो यद् यत्कीर्तिपात्रं रघुराजपुत्रः ।
स सर्व एवादिकवेः प्रभवो न कोपनीयाः कवयः क्षितीन्द्रैः।।

**राजकुमारी :** (पठति) तदैव तु अहं नृपसुता सत्यपि कवितायां श्रद्धां निदधामि ! भगवन् ! भवतां शैली अतीव रुचिरा !

काण्डवस्त्रं मध्ये व्यवस्थाप्य भवद्भ्यः शिक्षा प्राप्यते।

**विल्हणः :** केयं प्रहेलिका ? केयं राजनीतिः ?

**राजकुमारी :** भगवन् ! यदि भवान् वस्तुतः सनेत्रो विल्हण एव तदा इदं तु अवश्यमेव स्मरन् स्यात् यद्भवतोऽभिनन्दनेऽहं कदापि साक्षान्नोपस्थिता !

**विल्हणः :** निश्चप्रचम्! अदृष्टपूर्वान्नभवती । अद्यैव भवतीं विलोकयामि!

**राजकुमारी :** भवतोऽभिनन्दनं कर्तुमहमनीशा आसम्—यतो हि अहं पित्रादिष्टासम्—अन्धस्य गुरोः मुखं नावलोकयेयमीति ! भवाँश्च अन्ध आसीदिति मया पितुर्मुखादेव श्रुतम् ।

(फ्लैशवैकान्तार्गतफ्लैशवैकपद्धत्या)

**राजकुमारी :** तात ! कस्य पण्डितस्याभिनन्दनं भवति राजभवनेऽद्य?

**राजा :** वत्से ! अद्य तुभ्यं साहित्यशिक्षां दापयितुमस्माभिः विल्हणकविः राजभवनेऽभिनन्द्यते ।

**राजकुमारी :** सः एव काश्मीरिको विल्हणकविः यस्य रूपयौवनसम्पन्नत्वेन साकं काव्य विद्यावैभवमपि जेगीयते जनैः ।

**राजा :** पुत्रि ! स एव विल्हणः !

**राजकुमारी :** तदा तु अस्माभिरपि तस्याभिनन्दनं कार्यम् ।

**राजा :** अहं तु इदमत्रेच्छामि यत्त्वं तस्य स्वागतं कुर्याः । किन्तु एकः प्रत्यूहस्तिष्ठति अस्मिन् स्वागतमार्गे !

**राजकुमारी :** कः सः !

**राजा :** दौर्भाग्यात् गतमासे एवं विल्हणस्य नेत्रज्योतिर्विलुप्तम्। सहसैव आयतलोचनः सः अन्धो बभूव !

**राजकुमारी :** विल्हण अन्धः सञ्जातः ? हा कष्टम् !

**राजा :** सौमनस्यजनके तस्य नेत्रेऽधुना बीभत्सजनके सञ्जाते । दैवज्ञैश्च भणितमस्ति-यदि त्वम् अन्धस्य गुरोर्मुखं पश्यसि तर्हि विद्याविलोपस्ते स्यादिति !

**राजकुमारी :** किमहं स्वाध्यापकस्य मुखमपि द्रष्टुं नापारयेयम्? कथं तर्हि विद्याऽधिगम्येत !

**राजा :** वत्से ! एतदेव तु चिन्त्यते मया । वास्तविकमध्ययनं तु नेत्रद्वारेणैव भवति न तु वाग्द्वारेण । यदवधि अध्यापकः स्वनेत्राभ्यां अध्यापितस्य स्थितिं न पश्यति तदवधि स निश्चेतुं न शक्नोति—शिष्येण कियद् ज्ञातमिति ! यदवधि च छात्रो विविधभङ्गियुतं विद्यादातृमुखं न पश्यति तदवधि स झटिति अध्यापनीयं विषयं ग्रहीतुं समर्थो न भवति । अत्र च दैवेन गुरुरन्धोकृतः । दैवज्ञैश्च शिष्यायै तद्दर्शनं निषिद्धं व्यवस्थापितम् ।

**राजकुमारी :** इदानीं कथं मे साहित्यविद्याभ्युपगमः स्यात् ?

**राजा :** वत्से ! किमेवं कातरासि ? स एव विद्वन्मूर्धन्यः कविशिरोमणिस्तुभ्यं काव्यशिक्षां दास्यति । त्वं च अन्धमुखमपश्यन्ती एव काव्यशिक्षासारं ग्रहीष्यसि ?

**राजकुमारी :** कथमिव ?

**राजा :** मया अध्ययनस्थाने काण्डपटस्य व्यवस्था करिष्यते । विल्हणकविश्च सादरं निवेदितः स्यात् काण्डपटस्य द्वितीये पार्श्वे स्थित्वा अध्यापनार्थम् । एवं हि तव विद्याविलोपोऽपि नस्यात्; विद्वन्मूर्धन्यात् सारस्वतवैभवं च त्वं प्राप्नुयाः ।

**राजकुमारी :** युज्यते ।

**राजा :** अधुना त्वमत्रैव तिष्ठ ! वयं तस्य प्रज्ञाचक्षुषः कवेः स्वागतं कुर्मः (निःश्वस्य) भाग्यचक्रस्यापि गतिर्विचित्रा। एतादृशो विद्वान् कविश्च लोचनाभ्यां विहीनः संवृत्तः ।

(फ्लैशबैकान्तर्गतफ्लैशबैकसमाप्तिः)

एवं च भवन्तमन्धं मन्यमानाहं काण्डपटस्यापरभागे स्थित्वा भवत्स्वरलहरीमेव अश्रौष्म । दैवं भृशं निनिन्द यदेवंभूतो विद्वान् कविस्तेन लोचनाभ्यां विहीनः कृतः । अद्य यदा भवता कृतं चन्द्रवर्णनं श्रुतं तदा मया शंकितम्—इदं वर्णनं नेत्रहीनेन कर्तुं नैव पार्यते ! यो हि साक्षात्पश्यति चन्द्रबिम्बं स एव एतादृशं सजीवं वर्णनं कर्तुं क्षमः ।

अध्ययनान्निवृत्ताहं भवत्स्वरलहरीं निशम्य काण्डपटस्य पार्श्वे समागता। मया व्यलोकि यद्भवान् तु सनेत्र एव। आयतलोचनं भवन्तं वीक्ष्य न जाने मम मनसि कीदृशाः भावाः समायान्ति। अद्यावधि मया अविनय एव रक्षितो यद्भवान् साक्षात्प्रणामसमर्पणेनापि न सम्मानितः। तस्यापराधस्य मार्जनं मया क्रियते। सर्वस्वं मम भवते समर्प्यते। धन्यास्मि अहं, यया भवान् प्राप्तः।

(फ्लैशबैकसमाप्तिः)

तदनन्तरं मयापि तस्या कुष्ठिनीत्वकथा श्राविता। संभवतः चतुरेण राज्ञा चिन्तितमासीत् यदनेन प्रकारेण तस्य पुत्री न कस्यापि प्रेमपाशे पतिता स्यात्। अधुना स्पष्टं च सर्वस्मिन् संविधानके द्वयोरपि आवयोः आकर्षणं समधिकमभूत्। भाग्यचक्रस्य गत्या मया सा कुष्ठिनी अनिन्द्यसुन्दरोरूपेण समासादिता। नैसर्गिकाकर्षणभावनया बद्धौ आवाम् राज्ञो भयमपि विद्युदुद्योतप्रायमेव मन्यमानौ आस्वः। प्राक्तन जन्मसङ्गिनीव सा विरहकालं यापयित्वा मन्ये सहसैव मम पार्श्वे आगत्य मां प्रगाढमाश्लिष्टवती। कीदृशं लोकोत्तरानन्दपूर्णमासीत्तदालिङ्गनम्! मयापि तद्रूपे स्वर्गराज्यं दृष्टम्। तदनन्तरं चआवाभ्याम् यूनोश्चिरमित्रस्य चन्द्रस्य मधुरिमा अनुभूतो वर्णितश्च—

**विल्हण** : नेदं नभोमण्डलम्

**राजकुमारी** : अम्बुराशिः

**विल्हण** : नैताश्च ताराः

**राजकुमारी** : नवफेनभङ्गाः

**विल्हण** : नायं शशी

**राजकुमारी** : कुण्डलितः फणीन्द्रो

**विल्हणः** : नासौ कलङ्कः

**राजकुमारी** : शयितो मुरारिः

**विल्हणः** : एतद्विभाति चरमाचलचूलचुम्बि
डिण्डीरपिण्डरुचि शीतमरीचिबिम्बम्।
प्रज्वालितस्य रजनीं मदनानलस्य
धूमं दधत्प्रकटलाञ्छनकैतवेन॥

**राजकुमारी :** सह कुमुदकदम्बैः काममुल्लासयन्तः
सह घनतिमिरौघैर्धैर्यमुत्सारयन्तः ।
सह सरसिजखण्डैः स्वान्तमामीलयन्तः
प्रतिदिशममृतांशोरंशवः सञ्चरन्ति ॥

मत्कृते तु अस्मिन्नवसरे चन्द्रद्वयं प्राप्तमासीत्। अम्बरस्थाच्चन्द्राद-प्यधिकं रमणीयश्चन्द्रो मम सकाश एवासीत्। अत्यन्तं मधुराः क्षणास्ते आसन् येषु काव्यरसेन साकं सौन्दर्यप्रेमरसस्याप्यास्वादनमावाभ्यां कृतम्! किन्तु आवयोः क्रीडा निगूढैव स्थातुं नाशकत्। राज्ञः कर्णप्रान्ते अयमुदन्तोऽतिथीजातः। राजा क्रोधाविष्टः सञ्जातः। नृपतिना तज्जायया चाहं भृशमधिक्षिप्तः—

(फ्लैशबैकपद्धत्या)

**राजा :** विद्वन्मूर्धन्य! कविशिरोमणे! अध्यापकललाम! त्वया स्वसन्तानतुल्यशिष्यया साकं प्रणयलीलायां लज्जा नानुभूता?

**राज्ञी :** किमु एतदर्थमेव त्वं कश्मीरेभ्योऽत्राहूत आसीः यत्का-व्यशिक्षाया व्याजेन अस्माकं सुतया साकं अनङ्गरङ्गं विधास्यसि? धिक् त्वां नीचम् अध्यापककुलाङ्गारभू-तम्! कथ्यते—शिष्यः सन्तानतुल्यो भवति। त्वया च शिष्यैव कवलिता? एतादृशया शिक्षया को लाभः यत्र शिक्षकशिक्षितयोर्मध्य एव कामकला प्रस्फुरेत्!

**बिल्हणः :** महाराज! बिल्हणेन न कापि शिष्या उपभुक्ता! बिल्हणस्य शिष्यासीत् काचित् कुष्ठिनी। सा कुष्ठिनी तेन पाठितासीत्। किन्तु बिल्हणस्य प्रेमिकास्ति एका अनिन्द्यसुन्दरी-या हि तस्मिन् प्राणार्पणेनापि मुग्धा अस्ति, स्थास्यति च! भवान् भवतां सम्राज्ञी च शिक्ष-काणां दोषं सडिण्डिमघोषमुद्घोषयतः, किन्तु अहं पृच्छामि भवन्तम् किमु तेषां राजनीतिचतुराणाम-भिभावकानां नं कोऽपि दोषः ये हि प्रारम्भत एव शिष्य-शिक्षकयोर्मध्ये विभेदबुद्धिं निबध्नन्ति, ये हि

**बिल्हणः :** भवत्या उच्चारणं स्वरलहरी च मामध्यापनाय प्रेरयतः। अधुना नृपतयः प्रबोध्यन्ते। आकर्ण्यताम्। अधुना भवत्या एकाकिन्यैव सम्पूर्णः श्लोकः कण्ठीकृत्य श्रावणीयः न तत्र मया साहाय्यं करिष्यते। (सगुञ्जनं)

स्वेच्छाभङ्गुरभाग्यमेघतडितः शक्या न रोद्धुं श्रियः
प्राणानां सततप्रयाणपटहश्रद्धा न विश्राम्यति।
त्राणं येऽत्र यशोमये वपुषि वः कुर्वन्ति काव्यामृतै—
स्तानाराध्य गुरून् विधत्त सुकवीन्निर्गर्वमुर्वीश्वराः।

**राजकुमारी :** भगवन्। भवतां स्मरणशक्तिः कण्ठशक्तिश्चातीव समर्था। अहं तु इतो गत्वा सर्वानपि श्लोकाँल्लेखिष्यामि।

**बिल्हणः :** प्रथममिह तु श्रावयतु।

**राजकुमारी :** इदं प्रस्तूयते सम्पूर्णं पद्यम् (पठति)। भगवन्! भवत्कृपया मदीयापि स्मरणशक्तिर्वर्धते।

**बिल्हण :** कल्याणि! शनैः शनैर्भवत्या स्मरणशक्तिर्भूयोऽपि वर्द्धिष्यते! अद्य तु प्रथममेव दिनम्। अधुनान्तिमः श्लोकः पाठ्यते। प्रस्तूयते चायम्

हे राजानस्त्यजत सुकविप्रेमबन्धे विरोधं
श्रद्धाकीर्तिः स्फुरति भवतां नूनमेतत्प्रसादात्।
तुष्टैर्बद्धं तदलघु रघुस्वामिनः सच्चरित्रं
क्रुद्धैर्नीतस्त्रिभुवनजयी हास्यमार्गं दशास्यः॥

**राजकुमारी :** (सहासं) इदं पद्यं पितरं श्रावयिष्यामि येन स्वभावत एव कविषु श्रद्धां निदधानः स तेषु अधिकतरां श्रद्धां निदध्यात् ननु सौभाग्यमेवास्माकं यद्भवान् राजकुलं स्वोपस्थित्यालंकरोति!

**बिल्हणः :** अस्तु! अलं प्रशंसया! श्लोकं श्रावयतु।

**राजकुमारी :** यथाज्ञापयति भवान्। (पठति)

(फ्लैशबैकसमाप्तिः)

एवं च सा यामिनीपूर्णतिलका मयाध्यापिता सती दिनानुदिनं काव्य-

शास्त्रे नैपुण्यं समाससाद। यद्यपि सा कुष्ठिनी आसीत् किन्तु तस्या प्रतिभा अतीव निर्मला आसीत्। यथा जले तैलविन्दुः प्रसरति तथैव तस्या बुद्ध्यां समस्तमपि अध्यापितं वस्तु प्रसरति स्म। सत्वरमेव नानालङ्कारभेदेषु, काव्यरचनायां, नाटकेषु, कामशास्त्रे, अन्येषु च तेषु-तेषु काव्याङ्गभूतेषु शास्त्रेषु सा मत्तोऽपि निपुणतरा अजायत। 'सर्वतो जयमन्विच्छेत् पुत्राच्छिष्यात्पराभवम्' इति नियमानुसारेण ममापि इदमेवाभिलषितमासीत्। प्रतिदिनं मम सत्कारार्थं राज्ञा समर्पितैः ताम्बूलासनवस्त्रादिभिरहं न तथा तुष्टिं लेभे तथा तस्याः प्रतिभोद्रेकेण! सर्वमपि दत्तमासीत् दैवेन तस्यै किन्तु न सुन्दररूपमिदमेव चिन्तयन्नहं दैवं भृशं निनिन्द। मदीये आवासे एव अध्ययनस्थलं व्यवस्थापितमासीत्। तत्रैव मम सुखशयनादिकस्य व्यवस्थासीत्। प्रहरिणा साकमेकः सेवको मम सेवायां तिष्ठति स्म। प्रदोषवेलायां साहित्यचर्चा चलति स्म।

अध्यापनस्य क्रमे एवमेव प्रचलति कदाचिन्मधुमासस्य राका सम्प्राप्ता। राकेन्दोः ज्योत्स्नया आकाशवितानं राजतकांति प्राप्नोति स्म! अध्यापनानन्तरमहं स्वशय्यामधिरूढश्चन्द्रमेव वीक्ष्यमाणः आसम्। गवाक्षाच्चन्द्ररश्मयः कक्षं प्रविश्य तं सुधोज्ज्वलं कुर्वन्ति स्म। अनेके भावाः मम मानसे तरङ्गततिमुत्थापयामासुः। मच्चेतसि चन्द्रस्य वर्णनं कर्त्तुमिच्छा बलवती बभूव।

(फ्लैशबैकपद्धत्या)

**विल्हणः :** भगवन् सुधांशो! भवानपि मानवस्य जिज्ञासाया विषयो न जाने कदाप्रभृति संवृत्तः! भवन्तं वीक्ष्य ज्ञानविज्ञानवैभवशालिनो जनाः न जाने किं किं कल्पयन्ति! न जाने कियत्यः कथाः भवन्तमवलम्ब्य प्रचलिताः। भवतः कान्तिः, भवतः कलायाः क्षयः वर्द्धनं च, भवतः समुद्रोल्लासकारित्वं चकोरप्रीतिकरत्वं च न जाने कियत्यो गुणपरम्पराः कविभिरुपनिबद्धाः निबद्ध्यन्ते च। रमणीया ज्योत्स्ना भवतः! कल्पनाद्वितीया भवतः

कलङ्कः। कविभिर्बहूक्तं भवद्विषये
नाशयन्तो घनध्वान्तं तापयन्तो वियोगिनः।
प्रतन्ति शशिनः पादा भासयन्तः क्षमातलम् ॥
ज्योत्स्नाचयः पयःपूरस्तारकाः कंरवाणि च।
राजति व्योमकासारराजहंसः सुधाकरः ॥
उपोढरागेण विलोलतारकं
तथा गृहीतं शशिना निशामुखम्।
यथा समस्तं तिमिरांशुकं तया
पुरोऽपि रागाद् गलितं न लक्षितम् ॥
करमुदयमहीधरस्तनाग्रे गलिततमःपटलांशुके निवेश्य।
विकसितकुमुदेक्षणं विचुम्बत्ययममरेशदिशो मुखं सुधांशुः॥
अङ्कं केऽपि शशंङ्किरे जलनिधेः पङ्कं परे मेनिरे
सारङ्गं कतिचिच्च संजगदिरे भूच्छायमैच्छन् परे।
इन्दोर्यद्दलितेन्द्रनीलशकलश्यामं दरीदृश्यते
तत्सान्द्रं निशि पीतमन्धतमसं कुशिस्थमाचक्ष्महे ॥

(फ्लैशबैकसमाप्तिः)

अहं सानन्दं शर्वरीशसम्पदं वर्णयन् आसम्। साक्षाद्दृश्यमानं शब्दवृत्तेष्वपि स्थापितं पश्यामिस्म।...सहसैव मदीया दृष्टिः काण्डपटे पपात। एकं सुन्दरं मुखमण्डलं मामेव वीक्षमाणं तत्र दृग्गोचरीभूतम्। अहं निश्चयं कर्त्तुं नापारयम् किमु इदं मुखमस्ति अथवा अपरं चन्द्रमण्डलमेव? अथवा रात्रावेव कमलं विकसितम्! मदीयं कौतूहलं वृद्धिमापन्नम्!

(फ्लैशबैकपद्धत्या)

**राजकुमारी :** (शनकैः) अतीव शोभनं चन्द्रवर्णनम्!

**विल्हणः :** कोऽस्ति काण्डपटे?

**राजकुमारी :** किं भवान् मां पश्यति?

**विल्हणः :** (स्वगतं) स्वरस्तु राजकुमारीसदृश एव! किमु सैव मया विलोक्यते! हुं (प्रकाशं) कात्र भवती काव्यविघ्नमुत्पादयितुमिह तिष्ठति?

**राजकुमारी :** क्रोधं संहरतु । इयमहमागच्छामि भवत्पार्श्वे एव !

**विल्हण: :** का भवती ममाभिमुखमायाति ?

**राजकुमारी :** किमु भवान् विल्हणकविरेव ?

**विल्हण: :** निश्चप्रचम् ! किन्तु भवती का ?

**राजकुमारी :** यामिनीपूर्णतिलकाऽहम् !

**विल्हण: :** मदीया शिष्या ?

**राजकुमारी :** अथ किम् ?

**विल्हण: :** कृपया दूरे एव तिष्ठतु ! मया कुष्ठाक्रान्तया भवत्या दर्शनं नैव कर्तव्यमिति भवत्पित्रा देवज्ञेन न व्यवस्थापितम् । तद् गच्छतु काण्डपटस्यापरस्मिन् भागे। तत्रैव स्थित्वा किमपि भणतु, पृच्छतु वा। एतदर्थमेव तु काण्डपटो व्यवस्थापित: ! अयमहं लोचने मीलयित्वा स्थितोऽस्मि ।

**राजकुमारी :** लोचने मीलयित्वा? अन्धस्य लोचनमीलनेन को लाभः का वा हानि: ?

**विल्हण: :** कोऽस्ति अन्ध: ?

**राजकुमारी :** का वात्र कुष्ठिनी ?

**विल्हण: :** ननु अत्रभवती एव !

**राजकुमारी :** (स्वगतं) नैष वराकस्य अन्धस्य अपराध: यदि स: काव्यविघ्नमुत्पादयन्तं जनं कुष्ठिसंज्ञया व्यपदिशति ! (प्रकाशं) भगवन् ! अहं कुष्ठिनी—लक्षणया अभिधया वा ?

**विल्हण: :** ननु अभिधयैव ! अहं भवत्या दर्शनं कर्तुं, नैवानुमत: कुष्ठिन्या भवत्या दर्शनं नैव मया कार्यमन्यथान्धत्वं विद्याविहीनत्वं च मे स्यात्' (इति) भवज्जनकस्य देवज्ञस्य च व्यवस्था। तत्पालनार्थमेव केवलं काण्डवस्त्रव्यवस्थयाध्यापनं कर्तुमभिहितोऽस्मि । भवत्याः पित्रैव तु भवती कुष्ठिनी संज्ञापिता ।

**राजकुमारी :** पित्रा ? तेनैव भवान् अन्ध: प्रख्यापितः । तदैव तु मया

प्रारम्भतः एवं प्रकाशदायकं गुरुमन्धत्वेन जिज्ञासुं स्वस्थं च शिष्यं कुण्ठित्वेन संयोज्य विद्यायाः पवित्र-परम्परामेव ध्वंसयन्ति, ये हि अध्यापकं धनार्थिनं शिष्यं च अक्षरार्थिनमेव चिकीर्षन्ति, न तु गुरुं गौर-वयुक्तं शिष्यं च जिज्ञासुम्। गुरुशिष्ययोः पवित्रः सम्बन्ध एतादृशैरेव कपटकारिभिरभिभावकै-र्भ्रष्टीकृतः। धन्यास्ते प्रतिसीराप्रदायिनो द्वयोर्मध्ये!

**राजा** : अलं बहु जल्पितेन। नराधम, अस्मभ्यं शिक्षां ददासि? अरे नीच! कपटण्डित! यदि प्रारम्भत एवं तव हस्तयोः सा दत्ता स्यात्तदा तु त्वं रूपलोभी प्रथमदिने एव तां परिमृदितामकरिष्यः!

**राज्ञी** : त्वया स्वस्पर्शेण अस्मत्कन्या पांसुलीकृता! पुनश्च अस्माकमेवोपदेष्टा भवसि?

**विल्हण** : यदपि अहं भणामि तत्सर्वं युक्तमस्ति। प्रथमतस्तु शिक्षाया प्रेम्णश्च क्षेत्रमेव हि पृथक्। शिक्षा बुद्धिम-पेक्षते, प्रेम च भावनम्! शिक्षा प्रयत्नसाध्या भवति, प्रेम च नैसर्गिकं स्वयमेव आविर्भवति। शिक्षायां बन्धनं सम्भाव्यते, प्रेम च बन्धनहीनम्। अपि च यत्कथ्यते सन्तानतुल्यः शिष्यः अस्याप्युत्तरं—'गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ'—इति कथयता कविकुलगुरुणा कालिदासेन प्रदत्तमस्ति पूर्वमेव! पुत्रतुल्यः शिष्यः इत्यस्यायमेवाभिप्रायो यदस्माभिः शिष्यान्न किमपि गोपनीयम्। यथा हि स्वधनस्योत्तराधिकारिणं पुत्रमेव वयं कुर्मस्तथैव हि स्वज्ञानस्योत्तराधिकारिणं शिष्यं कुर्मः।

**राजा** : नराधम! यदेतद्व्याख्यापाटवं प्रदर्शयसि—अनेनैव तु जनाः भ्रान्ताः भवन्ति। अधुना भुंक्ष्व स्वकर्मफलम् पश्यास्माकमैश्वर्यम्, येन चौर्यापराधेनाभियुक्तः सन्

राजमार्गे पदातिरेव सापमानं नीयमानः सन् मृत्यु लप्स्यसे। कः कोऽत्र भोः ?

**प्रहरी** : जयतु महाराजः। को नियोगोऽनुष्ठीयताम्।

**राजा** : कोपपाल आहूयताम्।

**प्रहरी** : यथाज्ञापयति देवः।

**विल्हणः** : राजन्! यदि भवान् सत्यनिष्ठस्तदा मदीयेन वास्तविकेनापराधेन लोकं परिचिनोतु! किमनेन मिथ्याचौर्यापराधाभियोगेन ?

**राजा** : नीच! अस्माकमपि निन्दामिच्छसि? स्वयंनष्टः परान्नाशयसि? अधुनापि अस्माकं कन्याया अपवादं प्रख्यापयितुकामोऽसि! स्वकामबुभुक्षायाः फलं तस्यै एव दातुमिच्छसि? सावधानो भव। यदि त्वया स्वमुखादस्मत्कन्याविषये किमपि कुत्राप्युच्चारितं स्यात्तर्हि तुभ्यं मृत्योरपि कठोरः कश्चिद्दण्डो देयः स्यात्। दन्दशूक! अस्माभिस्तवार्चना का कृता—भुजङ्गाय पयः प्रदत्तम्। राजकुले स्थित्वा त्वं मत्तोऽभूः!

**विल्हणः** : राजन्! राजकुलं प्राप्य तु सर्वे मत्ता एव भवन्ति। तथापि मया न किमपि प्रमत्तत्वमाचरितम्। इदं तु भवद्दृष्टया एवं फलम् यद्गुरुः अन्धीकृतः शिष्या च कुष्ठिनी। भवतो राजनीतिरेव विद्यापथं कलङ्कितवती।

**कोपपालः** : (प्रविश्य) जयतु जयतु महाराजः।

**राजा** : कोपपाल! अयं कविकुलाङ्गारो विल्हणः सापमानं पाशैर्बद्धो राजमार्गे भ्राम्यताम्, वधशिलायां चास्य शिरश्छेदो विधीयताम् स्यात्। कपटकीटोऽयं चौरः स्वचौरकर्मफलमनुभवतु।

**कोपपालः** : यथाज्ञापयति देवः। चल रे मृत्युग्रास!

(प्लैशबैकसमाप्तिः)

कर्णाकर्णिकया मदीयमृत्युदण्डोदन्तः सर्वत्र प्रसृतः। अद्य चाहं कोप-

पालादिष्टैः प्रहरिभिः बध्वा नीयमानोऽस्मि । भाग्यचक्रमनुसरन्नेवै-करिनन्दिनेऽहमस्मिन् राजमार्गे उदात्तसम्मानं प्राप्तवान्, अद्य च तदेव चक्रमनुसरन्नहमपमानितो भवामि ।

('अयमस्ति स नीचोऽध्यापकः' 'कलियुगस्य पराकाष्ठा एव समागत यच्छिक्षका अपि कपटिनश्चौराः' 'अधुना विद्वत्त्वं नृपत्वाद् वरतरं सम्पत्स्यते यदा कवेः शिरः नृपाज्ञया कर्त्तयिष्यते !'—इत्यादिध्वनयः) ।

इदं दृश्यते वधस्थानम् । समीपतरं भवति ! इहैव क्रोधारुण-लोचनो राजा अपि मदीयं मृत्युनाट्यं विलोकयितु-कामस्तिष्ठति । मृत्योर्भयं किञ्चिदपि नास्ति मे । केवलमहं स्वप्रियामेव ध्यायामि । मृत्युनानलिङ्ग्यमानोऽपि अहं स्व-प्रियायाः विविधाश्चेष्टाः, तस्या अनुपमं सौन्दर्यं, तस्या वैदुष्यं, तस्या निर्व्याजप्रेम—किं बहुना तस्याः सर्वमपि कौतुकमेव स्मरामि ! (गुञ्जति) ।

**प्रहरी :** किं गीयते कविशिरोमणिना ?

**विल्हणः :** तव गानेन किं प्रयोजनम् ! त्वं तु राजाज्ञापालनोद्यतो भव । अहं यद् गायामि, तद् गायामि । (सगुञ्जनम् गायति) ।

**प्रहरी :** मृत्युमुखे गच्छतोऽपि तव बुद्धिर्न व्यवस्थिता ? गीतं, वाद्यं, काव्यं किमपि पठ, नृत्यं कुरु कूर्दनं वा, अस्माकं का हानिः? म्रियमाणोऽपि जनानां हास्यभाजनं भूयाः!

**विल्हणः :** (गायति) ।

अद्यापि तां कनकचम्पकदामगौरीं
फुल्लारविन्दनयनां तनुरोमराजिम् ।
सुप्तोत्थितां मदनविह्वललालसाङ्गीं
विद्यां प्रमादगलितामिव चिन्तयामि ॥

अद्यापि वासगृहतो मयि नीयमाने
दुर्वारभीषणकरैर्यमदूतकल्पैः ।

किं किं तया बहुविधं न कृतं मदर्थे
वक्तुं न पार्य्यत इति व्यथितं मनो मे ॥

अद्यापि तां नृपतिशेखरराजपुत्रीं
सम्पूर्णयौवनमदालसपूर्णनेत्राम् ।
गन्धर्वयक्षसुरकिन्नरराजकन्यां
स्वर्गादहो निपतितामिव चिन्तयामि ॥

**प्रहरी :** गानमुपसंहर विल्हणपण्डित ! इष्टं स्मर। वधस्थानं प्राप्तोऽसि !

**विल्हणः :** बन्धो ! त्वं स्वकीयमुपदेशं संहर ! अहं निरंकुशोऽस्मि कविः, त्वं च सांकुशोऽसि ।

**प्रहरी :** यथा तुभ्यं रोचते-तथा कुरु! जयतु महाराजः। राजमार्गे सापमानं प्ररिभ्राम्य अयं चौरकविः, कपटपण्डतो विल्हणः वधस्थानमानीतः।

**राजा :** भण विल्हण ! कीदृशमनुभूतम् अस्मत्प्रजया कृतमभिनन्दनम् ?

**विल्हणः :** अस्मदनुरूपं भवदनुरूपं च। भवतः प्रजा म्रियमाणं कविं द्रष्टुं भवतो दण्डविधानं च द्रष्टुमंतावतोत्साहेन संहता—इति द्वयोरपि गौरवं वर्द्धितम् ।

**राजा :** विल्हणपण्डित ! मृत्युक्रोडे विश्रामं लब्धुं सन्नद्धो भव। वयं मुमूर्षोः प्राणिनः कामनाः पूरयितुकामाः स्मः। यदि तव काचिदिच्छा वर्तते—तर्हि सास्माभिः पूरणीया स्यात् ।

**विल्हणः :** मुमूर्षोरिच्छापूरणव्रतिन् ! जिजीविषोरिच्छां खण्डयति भवान् । मुमूर्षोश्च पूरयति। भवतस्तु कर्त्तव्यम् इच्छाभञ्जनमस्ति न तु इच्छापूरणम् ! ननु राजनीतिर्लोकेच्छाभञ्जनपर्यायभूता। अस्मिन् जतिग

कस्यापि इच्छाः कदापि केनापि न पूरिताः न च पूरयितुं शक्याः। येऽपि मन्यन्ते यत्तो कस्यचिद् इच्छां पूरयन्ति ते दम्भिनः।

**राजा** : तव कटुशब्दैरपमानिता अपि वयं पुनस्तवेच्छां ज्ञातुमुत्सुकाः। विनेच्छापूरणमस्माभिस्त्वं मृत्यवे न देयः स्यात्।

**विल्हणः** : वस्तुतः शुश्रूषुरस्ति भवान् ममेच्छाम् ?

**राजा** : वस्तुतः।

**विल्हणः** : अधुनातु एकैवेच्छा, एकैव कामना। यदि पूरयितुकामोऽस्ति भवान् तां, तर्हि स्वतनूजां मह्यं पत्नीत्वेन ददातु। सैव मम जीवनम्, सैव मम विद्या, सैव मम तपस्या, सैव मम त्राणम्। स्वपुत्र्या अभिलाषं पूरयित्वा तस्यै गौरवं दीयताम्।

**राजा** : यत्कृते दण्डितः पुनरपि तदेव वाञ्छसि! क्षणद्वयान्तराले अन्यां कामपि कामनां प्रकटीकुरु। अन्यथा मरणाय सज्जीभव।

**विल्हणः** : भद्रपुरुषो द्विर्नाभिभाषते। मरणाय तु सज्जः पूर्वत एवास्मि। मरणानन्तरमिदं परमेश्वरं याचे।

पञ्चत्वं तनुरेतु भूतनिवहः स्वं स्वं विशत्वालयम्
याचित्वा द्रुहिणं प्रणम्य शिरसा भूयादिदं मे वपुः
तद्वापीसु पयस्तदीय मुकुरे ज्योतिस्तदीयाङ्गणे
व्योम्नि व्योम तदीयवर्त्मनि धरा तत्तालवृन्तेऽनिलः।

**राजा** : (सव्यंग्यम्) धन्योऽसि कवीन्द्र! सत्यमेव भण्यते-'मुमूर्षुः शृगालो नगराभिमुखं धावतीति। एवम्प्रकारक जल्पनार्थमेव धात्रा तुभ्यं कवित्वशक्तिर्दत्ता। दृष्टो दुर्विपाकः प्रतिभाया अद्यास्माभिः। दृष्टञ्च ते देशकालाद्यौचित्यम्! यद्यन्यत्किमपि अनुरूपं! याचसे तर्हि भण!

विल्हणः : अद्यापि नोज्झति हरः किल कालकूटं
कूर्मो बिभर्ति धरणीं खलु पृष्ठभागे ।
अम्भोनिधिर्वहति दुस्सहवाडवाग्निम्
अङ्गीकृतं सुकृतिनः परिपालयन्ति ॥

राजा : (सकंपम्) प्रतीयते वेद्यान्तरस्पर्शशून्ये ब्रह्मानन्दसहोदरे रसे निमग्नोऽसि ! अधुना परमानन्दं भज (सरोषं) कोपपाल ! विल्हणस्य शिरश्छेदो विधीयताम् ।

कोपपालः : यथाज्ञापयति देवः। विल्हण ! महाकालं प्रणम! अयं त्वं तदर्चाकुसुमं भवसि । शिरो नमय ! नेत्रे मीलयित्वा इष्टं स्मर । खड्गप्रहारं प्रतीक्षस्व ।

विल्हणः : (तथा कृत्वा), कोपपाल ! अहं प्रस्तुतोऽस्मि ! तामेव इष्टरूपेण स्मरामि लोचने मीलयित्वा (विलम्बं वीक्ष्य) किन्तु खड्गं कथं न पातयसि मद्ग्रीवायाम् ? यामिनि ! त्वया साकमग्रिमे जन्मनि सम्मेलनं भविता । शुभं ते जीवनं स्यात् ! कोपपाल ! खड्गेन कथं न प्रहरसि ?

राजा : (विहस्य) हा हा हा । ह ह ह! उत्तिष्ठ, विल्हण पण्डित ! उत्तिष्ठतु भवान् ! यथास्माभिः प्रेमपरीक्षायां भवान् परीक्षितस्तथैव स्वसुतापि परीक्षिता—

(फ्लेशबैकपद्धत्या)

राजा : यामिनि ! त्वं विल्हणस्य शय्यां कथं गता ?

यामिनी : ननु तस्य उदात्तं काव्यात्मकं चन्द्रवर्णनं श्रुत्वा ?

राजा : काण्डपटतस्त्वया तस्य मुखं कथं दृष्टम्? त्वं त्वस्माभि-र्निषिद्धासीत् तस्य मुखम् द्रष्टुम् ।

यामिनी : तात ! मया अन्धस्य मुखमद्रष्टुमेव तु भवद्भिर्व्यवस्था दत्ता न तु आयतलोचनस्य ।

**राजा** : तस्मै नराधमाय विल्हणाय तु एतत्साहसार्थं पुरस्कार-स्वरूपेण मृत्युदण्डो दीयतेऽस्माभिः तव कृते च अध्ययनविरामः क्रियते।

**यामिनी** : भवान् तस्मै मृत्युदण्डं ददतु! सुखमनुभवतु भवतो दण्डविधानम्! अहमपि जीवनं समापयिष्ये।

**राजा** : लज्जां नानुभवसि पितुः समक्षं वाचोविजृम्भणे? प्रथमं तु परपुरुषेण साकं प्रेमक्रीडां कृतवती, अधुना च असम्बद्धं प्रलपसि?

**यामिनी** : महाराज! कोऽयं परपुरुषः? यं पुरुषमहं श्रितवती स हि न कस्यापि पतिः। अहं च तस्मिन्ननुरक्ता, सर्व-शास्त्रविदं तमेकदेव स्पृष्ट्वाहं धन्यास्मि। यदि जीवन-पर्यन्तं तस्य संगतिं करोमि तदा नित्यमेव धन्या स्याम्। तस्य न कोऽपि दोषः। ममैव तस्मिन् अभिनिवेशः। भवतः कपटजालेन द्वावपि नररत्नौ अन्धकुष्ठिनौ कृतौ! ननु राजनीतिर्निर्दोषेषु दोषोत्पादिनी? यदि तस्मै मृत्युदण्डः दीयते तर्हि मह्यमपि देयः स्यात्।

**राजा** : युक्तम्। त्वमपि तेनैव साकं मृत्युमुखं प्राप्स्यसि! त्वं महिलारक्षिकाभिः वधस्थानं नीयमाना सती विल्हणं म्रियमाणं दृष्ट्वा स्वयमपि मरिष्यसि।

**यामिनी** : युक्तम्। एवं राज्यदण्डारोपणेण प्रेम प्रणष्टं न भवति। न जाने कियन्तो विल्हणाः कियत्यश्च यामिन्यो याव-च्चन्द्रद्दिवाकरौ भूमौ स्थास्यन्ति।

**राजा** : अलं बहु जल्पितेन!

(फ्लैशबैकसमाप्तिः)

भवानपि परीक्षायामुत्तीर्णः। साप्युत्तीर्णा। पश्यतु सा महिलारक्षि-काभिः रथमारोप्यानीयते। भवान् तस्याः कृते एव वेधसा निर्मितः।

सा च कलेव भवन्तं साहित्यसारं प्राप्य कृतार्था। (रथध्वनिः) परीक्षां विना प्रेम केवलं विलास एव। परीक्षावह्नौ च परीक्षितं प्रेम द्वादशवर्णं स्वर्णमिव शोभमानं जीवनालङ्कारीभवति।

**वेत्रवती :** जयतु महाराजः ! यामिनीपूर्णतिलका समानीता ! सम्राज्ञी अपि सहैव आयाता।

**राजा :** ह ह ह ! सुतायाश्चिन्तया आकुला मन्ये सा !

**यामिनी :** (प्रविश्य) पितः ! किमिदम् ?

**राज्ञी :** वत्से ! तव परीक्षापरिणामः।

**राजा :** विल्हणपण्डित ! रत्नं समागच्छतु, काञ्चनेन।

**राज्ञी :** साहसं श्रीरभ्युपैतु।

**राजा :** अस्माभिः विल्हणकविना साकं स्वसुतायाः विवाहः समुद्घोष्यते।

**सर्वे :** जयतु महाराजः। जयतात् न्यायविधानम् जयतु राजपुत्री ! जयतु विल्हणः।

**यामिनी :** पितः ! मातः ! ओः !प्रमत्तेवास्मि संवृत्ता ! विल्हण ! किमिदं संवृत्तम् ! मत्कृते भवता बहु अपमानंः सोढम् !

**विल्हणः :** ननु त्वयापि यामिनि।

**यामिनी :** अहो कीदृशं नियतिचक्रम् !

**विल्हणः :** तदनुसरणमावाभ्यां कृतम् ! अस्तु। यामिनि ! क्लेशः फलेन हि पुनर्नवतां विधत्ते।

**यामिनी :** विल्हण !

**विल्हणः :** यामिनि !

**(सुखदसङ्गीतेन समापनम्)**



ग्रन्थकारः

| | |
|---|---|
| नाम | : रमाकान्त शुक्लः |
| जन्मतिथिः | : २४.१२.१९४० |
| जन्मस्थानम् | : खुर्जा (उ० प्र०) |
| शिक्षा | : एम० ए० (हिन्दी–संस्कृतयोः) पीएच० डी०, साहित्याचार्यः, सांख्ययोगाचार्यः |
| प्रकाशिता: ग्रन्थाः | : जैनाचार्य रविषेणकृत 'पद्मपुराण' और तुलसीकृत 'रामचरितमानस' (१९७४), भाति मे भारतम् (१९८०), जय भारतभूमे ! (१९८१) अर्वाचीनसंस्कृतमहाकाव्यविमर्शः (खण्डत्रयात्मकः) (१९८०-१९८२), अर्वाचीनसंस्कृतसाहित्यपरिचयः (खण्डद्वयात्मकः) (१९८२–१९९१) 'अर्वाचीनसंस्कृत' संग्रहः खण्डत्रयात्मकः (१९९२) नाट्यसप्तकम् (१९९२) भारतजनताऽहम् (यन्त्रस्थः) |
| आवास-संकेतः | : आर–६, वाणी विहारः, नयी दिल्ली-११००५९ |